# भक्तिरसायन-प्रपा

( श्रीमद्भागवतदशमस्कन्ध पूर्वार्धीय-श्रीशकथावीजव्यञ्जकस्य
भक्तिरसायनमहाकाव्यस्य विषमस्थल-टिप्पणी )

पूज्य स्वामी श्री गुरुपादानन्द सरस्व[illegible]
को
श्रीमती हेमलता बहिन खटाऊ की
ओर से
सप्रेम भेंट

—संग्रथकाः—

**श्रीमाधवशास्त्रि दाताराः**

**श्रीगोविन्द नरहरि वैजापुरकर**
**एम० ए० न्याय-वेदान्त-साहित्याचार्य-कृत**
**भक्तिरसायनाध्ययन-**
**नामिकया भूमिकया सहितम्**

श्री स्वामी स्वरूपप्रकाशानन्द सरस्वती, वेदान्ताचार्य, Ph.D
श्री कुमारस्वामी मठ, केदार घाट, वाराणसी
उत्तर प्रदेश

# भक्ति-रसायनम् : एकमध्ययनम्

•

—श्री गोविन्द नरहरि वैजापुरकरः—

[ एम० ए०, न्याय-वेदान्त-साहित्याचार्यः, 'सूर्योदय'-सम्पादकः ]

•

अथेदं प्रस्तूयते श्री हरिसूरि-संग्रथितं 'भक्ति-रसायना'ख्यं भागवत-दशम-स्कन्धपूर्वार्धीयं श्रीश-कल्पतरु-क्रीडा-फलायितं भक्ति-महाकाव्यम् । अस्य भागवत-प्रकरणत्वात् तदीयैः प्राशस्त्यैरेव प्रशस्ततासिद्धेः आदौ तदेव प्रतायते ।

### भागवत-तात्पर्यम्, तद्गरिमा च

तत्र परमभागवतेन बादरायणिना 'ज्ञानप्रदीपो'ऽयं ग्रन्थो निरूपितो यथा—

> कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा
> तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ।
> योगीन्द्राय तदात्मनाथ भगवद्राताय कारुण्यत-
> स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥
> ( भाग० १२. १३. १९ )

एतदुक्तं भवति—सृष्ट्यादौ भगवता नारायणेन किंकर्तव्यविमूढाय ब्रह्मणे कारुण्यतो ज्ञानदीपोऽयं प्रकाशितः । तेनैव विधातृरूपेण देवर्षये नारदाय, नारद-रूपेण कृष्णद्वैपायनाय व्यासदेवाय, व्यासरूपेण अवधूतशिरोमणये आत्मरूपाय श्री वृषभानुनन्दिन्याः लीलाशुकाय शुकदेवाय, शुकाचार्येण च महाभागवताय राजर्षये परीक्षितेऽयं प्रज्वलितः । पौराणिकाचार्येण सूतेनापि अयम् 'अध्यात्म-दीपे'ति व्याहृतः—

> यः स्वानुभावमखिलश्रुतिसारमेक-
> मध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।
> संसारिणां करुणयाऽऽह पुराणगुह्यं
> तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥
> ( भाग० १.२.३ )

न पुनर्भागवतमेव, तत्प्रख्यापको भगवान् श्रीकृष्णरूपधृक् नारायणोऽपि अध्यात्मदीपत्वेन स्मृतस्तत्रैव—

रूपं यत्तत् प्राहुरव्यक्तमाद्यं
ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ।
सत्तामात्रं निर्विशेषं निरीहं
स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥
( भाग० १०.३.२४ )

एतेन अध्यात्मदीपरूपो भागवतग्रन्थोऽध्यात्मदीपात्मना भगवता प्रकाशित इति स्वप्रकाशलक्षणं ब्रह्मैव भागवतं तत्प्रस्तोता च सिद्ध्यतः । अस्य श्रवण-मनन-निदिध्यासनकर्ताऽपि प्रत्येकशो ब्रह्मभूयतां गच्छन्नत्रालोक्यते, यथा राजर्षिः परीक्षिद् 'ब्रह्मभूतस्य राजर्षेः' इत्यादिना स्मर्यते ।

वस्तुतस्तु तात्पर्यनिर्णायकैः सर्वैरपि प्रमाणैः शाश्वतं परं ब्रह्मतत्त्वमेव ग्रन्थस्यास्य विवक्षितमवगम्यते । तत्र उपक्रमो यथा—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥
( भाग० १.१.१. )

उपसंहारश्लोकश्च 'कस्मै येन···सत्यं परं धीमहि' इत्यादिनाऽनुपदमेव उक्तपूर्वः । शिष्टानि च तात्पर्यनिर्णायकानि अभ्यासा-ऽपूर्वता-फलाऽर्थवादो-पपत्तिरूपाणि प्रमाणान्यपि तदेव तत्त्वमस्य विवक्षितमनुवदन्ति—'यज्ज्ञानमद्वयम्' ( १.२.११ ) 'इति तद् ब्रह्मदर्शनम्' (१.३.३३ ), 'अहं ब्रह्म परं धाम' ( १२.५.११-१२ ) 'ब्रह्मणि निष्कले,' 'त्वय्यद्वितीये भगवन्नयं भ्रमः' ( १०.५९.३० ) इत्यादिभिः, अन्ते च—

सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित् ॥
( भाग० १२.१३,१५ )

इत्यादिना ।

युक्तमेवैतत् । यतो हि सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः इत्यादिश्रुति-स्मृतिभिश्चापि वेदतात्पर्यं केवलं ब्रह्मण्येव बोध्यते । तदिदं वेदतात्पर्यं वेदार्थसारो वा गायत्रीमन्त्रो भागवतेन उपक्रमोपसंहारयोः सत्यं परं धीमहि

इति पदैरविकलं सङ्कलितः। गायत्रीमन्त्रोपासकानां 'धीमहि' इति पदं सुपरिचितं खलु। अत एव मत्स्यपुराणे भागवतलक्षणप्रस्तावे सर्वप्रथममेवोक्तम्—

यत्राऽधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः।

( मत्स्य० ५३.२० )

अन्यत्र ब्रह्मसूत्रार्थरूपेण महाभारतनिश्च्योतितार्थरूपेणापि चैतत् स्मर्यते—

अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः।
गायत्री-भाष्यरूपोऽसौ वेदार्थपरिबृंहितः॥

एतावता सुस्पष्टमेतद् यद् भागवतमिदं तत्प्रतिपाद्यो विषयः, तत्प्रतिपादको भगवान्, तच्छ्रोता च भावुकः, सर्वमप्येतत् सच्चिदानन्दाखण्डानन्ताद्वयस्य ब्रह्मण एव रूपं यद्धि जीवस्य निर्विशेषं प्राप्तव्यमास्ते। सत्यरूपं ब्रह्मैव भागवतमिदं तैस्तैः ब्रह्मविद्वरिष्ठैराविष्कृतं भागवतानामस्माकं पुरो विजृम्भमाणं सत् कमपि निरतिशयमाह्लादं जनयति।

सत्य-प्रेम-कारुण्य-त्रिवेणी

एतादृशस्य श्रीमद्भागवतग्रन्थस्य अवतारोऽपि श्रीमन्नारायणाद् आपरीक्षितं श्रोतुर्वक्तुश्च करुणाप्रसूत एव, यच्च तत्र तत्र 'कारुण्यतः', 'कारुण्यात्', 'कारुणिकस्य' इत्यादिपदान्येव मुखरयन्ति। करुणेयं सर्वथा निरुपाधिकी एव, अनाद्यविद्याऽन्धतमसि निमज्जतां जीवानां समुद्धाराय करुणावरुणालयस्य। भक्तिमात्रोपदेशकैः नारदादिभक्तवरैः प्रचारणात् प्रेमात्मिकायाः भक्तेरुपष्टम्भकत्वमस्य पृथक् वक्तव्यतां नापेक्षते। भक्तिरियं न साधनरूपिणी, प्रत्युत पराख्या साध्यरूपा परज्ञानादभिन्ना सा ब्रह्मणि काममपि सरसतां जनयति। एवञ्च सत्य-प्रेम-करुणाया दिव्यतमायामस्यां त्रिवेण्यां भावेन, कुभावेन वा, ज्ञानतोऽज्ञानतो वा निमज्जन् कोऽपि जन्तुर्नूनमनायासेन परब्रह्म-सरूपतां प्रतिपद्यते। अप्रचारितोऽप्यविज्ञातोऽपि वह्निः स्पृष्टो दाहं समाचरत्येव।

श्रीकृष्णाख्यं परं ब्रह्म

भक्तानुग्रहाय धर्मसंस्थापनाय च भगवतोऽवतारक्रमे तत्र तत्र अपेक्षानुरूपं ब्रह्मण एवैककलात्मकम् अवतारजातं पूरयितुं षोडशकलत्वेन समवतृतं पूर्वोक्तं ब्रह्मैव नन्दनिकेते यशोदाया उत्सङ्गगतं परमहंसैः संस्तुतमत्र वर्ण्यते। तथा चोक्तम्—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥
कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्।
जगद्धिताय सोऽप्यत्र देहीवाऽऽभाति मायया॥

षोडशकलमिदं ब्रह्मैव कृष्णस्तु भगवान् स्वयम्, कृष्णं वन्दे जगद्गुरुम् इत्यादिना स्मर्यते। सहृदयधुरीणेन बादरायणिना तदेव 'परं सत्यम्' इत्यनेनाऽभिव्यञ्जितम्, ब्रह्मवैवर्तपुराणेन ( गणेशखण्डे ) परब्रह्मरूपेणैव तत्स्मरणात्। यथा—

आब्रह्मस्तम्बपर्यन्तं सर्वं मिथ्यैव पार्वति।
भज सत्यं परं ब्रह्म राधेशं त्रिगुणात्परम्॥

गर्ग-संहिताऽपि श्रीकृष्णमेव परसत्यात्मकं परिपूर्णतमं व्याहरन्ती 'सत्यं परमि'-त्यनेनाभिव्यञ्जितं व्यङ्ग्यमनुवदति—

ककारः कमलाकान्त ऋकारो राम इत्यपि।
षकारः षड्गुणपतिः श्वेतद्वीपनिवासकृत्॥
णकारो नारसिंहोऽयमकारो ह्यक्षरोऽग्निभुक्।
विसर्गौ च तथा ह्येतौ नरनारायणावृषी॥
संप्रलीनाश्च षट्पूर्णा यस्मिञ्छुद्धे महात्मनि।
परिपूर्णतमे साक्षात्तेन कृष्णः प्रकीर्तितः॥
पूर्णो नृसिंहो रामश्च श्वेतद्वीपाधिपो हरिः।
वैकुण्ठोऽपि तथा यज्ञो नरनारायणः स्मृतः।
परिपूर्णतमः सः स्याद्यस्मिन्नेते लयं ययुः॥

सत्येवं कथङ्कारम् इत्थम्भूतगुणो भगवान् श्रीकृष्णोऽध्यात्मदीपायितस्य भागवतस्य विवेचनीयो न स्यात्? तदा तदुद्दिष्टं ब्रह्मनिरूपणमपि कथं पूर्णतां गच्छेत्? अत एव दशमस्कन्धे जन्मतो देहोत्सर्गान्तं तच्चरितं सविशेषं निरूपितमत्र। तेनैवेदं 'रसमालयम्' ( रसमायाः आलयम् ) अभूत्। निर्गुण-सगुणयोः तत्तदैश्वर्यसमन्वितममुं प्रपानकरसं पाययन्तः श्री शुकाचार्याः नूनं सिद्धहस्ताः सारस्वता एव। निजं धाम गच्छता भगवता स्वयमेव महाभागवताय उद्धवायोक्तं यदहं भागवतरूपेण स्वात्मानमत्र संस्थाप्य सदैव भवादृशां सान्निध्यं भजिष्यामीति।

### भागवतं श्रीकृष्ण-विग्रहः

वस्तुतो भागवतं महापुराणं विश्वनाटकसूत्रधारस्य परब्रह्मणः श्रीकृष्णस्य मूर्तिमद्विग्रह एव। प्रथम-द्वितीयस्कन्धौ दक्ष-वामपादौ, तृतीय-चतुर्थस्कन्धौ दक्ष-वामबाहू, पञ्चम-षष्ठस्कन्धौ ऊरुयुगलम्, सप्तमस्कन्धः दक्षिणः करः, अष्टम-नवम-स्कन्धौ स्तनयुगलम्, स्कन्धो ललाटम्, द्वादशस्कन्धश्च वामकर एवेति साम्प्रदायिकैर्निरूपितम्। इत्थं समग्रं भागवतं भगवतो मूर्तिमद्विग्रहः सिद्ध्यति। तत्रापि हृदयस्य ललाटस्य ( मस्तकस्य ) च क्रमशो भक्त्या ज्ञानेन च सम्बन्धात् तत्रैव प्रायः सर्वेषां भागवतानामतितरां पक्षपातो दृश्यते।

शुद्धाद्वैत-सम्प्रदायप्रवर्तकाः पोषणं भगवदनुग्रहं मन्यमाना जगद्गुरवो वल्लभाचार्यपादाः दशमस्कन्धं सविशेषं व्याचख्युरिति भागवतमर्मज्ञेभ्यो न तिरोहितम्। ज्ञानावताराः अखिलं विश्वमेकाद्वितीयत्वेन परिपश्यन्तो महाराष्ट्रीय-सन्तवराः श्री एकनाथ-महाभागाः पुनः एकादशस्कन्धमेव स्वीयनिरूपणविषयत्वेन निर्वाचितवन्त इत्यपि भागवतेभ्योऽपूर्वतया सूचनीयं वस्तु। ज्ञान-भक्त्योः प्रवर्तितायां साम्प्रदायिकस्पर्धायां भगवता उभे अपि स्वोत्तमाङ्गत्वेन स्वीकृत्य तयोर्ब्रह्मरूपस्य स्वात्मनो दर्शनेऽनिवार्यत्वं साधयता विवादोऽयं सर्वथा शमित इत्यहोऽनुग्रहो भागवतानामुपरि ग्रन्थराजस्यास्य !

यद्यपि एकादशस्कन्धोऽध्यात्मदीपस्यास्य ग्रन्थस्य कोटिसूर्यप्रकाशायितो भागवतधर्मस्य निर्विशेषं व्यवस्थापकः; तथापि अधिकारिविशेषसापेक्षत्वेन नियतजनपरिसीमित एव सः। जनसाधारणस्य भागवतधर्मानुरक्ति-भक्ती पुनर्दशमेनैव स्कन्धेन साध्यते। अत एवाऽत्रैव परमभागवतानां श्री बोपदेवप्रभृतीनां सविशेषाऽभिरुचिः। पुष्टिमार्गानुयायिनां श्रीमद्वल्लभमहाप्रभु-विट्ठलेश-सूरदासादीनां पुनः ऐश्वर्य-वात्सल्यसारसर्वस्वेऽस्मिन् वेदातिशायिनि स्कन्धे अपूर्वानुरक्तिः।

श्री बोपदेवैः स्कन्धोऽयं गोकुल-मथुरा-द्वारकेति प्रकरणत्रयेषु विभक्तैः कथाभागैः व्याख्यातः। महाप्रभुभिः पुनः जन्म-प्रकरणम्, तामस-प्रकरणम्, राजस-प्रकरणम्, सात्त्विक-प्रकरणम्, गुणप्रकरणञ्चेति पञ्चधा विभक्तः। विषयोऽयं सर्वथा स्वतन्त्रलेखरूपेणैव निरूपणीय इति सङ्केतत एवात्र समुट्टङ्कितः। पञ्चसु एतेषु प्रकरणेषु गुणप्रकरणं सर्वथाऽतिशायि। भगवद्धर्मयोः विशिष्टस्य रागस्य अनासक्तेश्च अत्रैव परिपूर्णः परिपाको विलोक्यते। पट्टमहिष्या रुक्मिणीदेव्याः सह सम्पन्ने वार्ताप्रसङ्गे ( १०.३०.२० ) भगवता स्वयमेव सर्वथा अनासक्ता तटस्था च आत्मनः स्थितिः प्रकटीकृता। तादृशे भगवति रागोऽप्यन्ततो वैराग्यरूपेणैव प्रतिफलतीति विवेचकानां न तिरोहितम्। एवञ्च लौकिकरूपेण ऐश्वर्यातिशयपूर्णोऽप्ययं स्कन्धः परसत्यस्य परब्रह्मण एव तदैश्वर्यं व्यञ्जयन् स्वाङ्गिनो ग्रन्थस्य अध्यात्मदीपत्वं स्फुटं व्यनक्त्येव।

### भक्ति-रसायनस्य उद्दिष्टम्

अमुमेव महामहिमशालिनं दशमस्कन्धमाश्रित्य तत्रापि सरसतरं पूर्वार्धभागमेवाभिलक्ष्य श्रीशकलतरु-क्रीडाफलायितं 'भक्ति-रसायना'ख्यं भक्तिकाव्यमिदं संग्रथितं सविशेषयशोमुषि-प्रकाशित-चतुरावकाशैस्तत्रभवद्भिः श्री हरिसूरिपादैः। अस्य ग्रथने कवेः किमुद्दिष्टमिति तदीयैरेव पद्यैः साधु निरूपितं भवेदिति तान्येवात्र समुपस्थाप्यन्ते—

**श्रीमद्भागवतप्रधान-दशमस्कन्धस्थितानि क्रमात्**
**प्रत्यध्यायनिरूपितेश - चरितान्यादाय सारांशतः।**

श्रीगोविन्दकृपा सुधारस-लसत्स्वादं सदानन्दकृत्
कुर्वे भक्तिरसायनं निखिल-हृद्रोगापनोद-क्षमम् ॥
तस्येशस्य चरित्रजातमनभिप्रायं कथं वा भवे-
न्नाबीजं कुरुतेऽल्पधीरपि जनः क्षुद्रोऽपि किञ्चित् क्वचित् ।
आलोच्येत्यखिलार्तिहारिहरिणा श्रीशप्रसादोल्लस-
च्चित्तेन क्रियते रसायनमिदं प्रव्यक्तबीजोदयम् ॥
स्वभावात् क्वापि तर्केण कुत्रचिद्रूपकादिभिः ।
ज्ञेयं विज्ञैरिह श्रीशक्रीडाबीज-विवेचनम् ॥

( भक्तिरसाय० उपक्रमे श्लो० ११, १३, १४ )

इत्थं दशमस्कन्ध-पूर्वार्धगत-भगवल्लीलाचरितबीज-मार्गणाय प्रस्तुतोऽयं कविवरः प्रत्यध्यायं पुष्पिकायां पाठकानपि तत्रैवाऽऽवर्जयितुं तदेवोद्दिष्टं स्मारयन् दृश्यते—

श्रीशकल्पतरु क्रीडाफल - भक्तिरसायने ।
मुदे भवतु साधूनामध्यायार्थ निरूपणम् ॥

( तत्रैव अ० १, श्लो० ५४ )

कवेरयं महाप्रयासो न स्वचेतसो विलसितमात्रम् । प्रत्युत ईशप्रेरणैवात्र प्रभवतीति तेनैवोच्यते—

इत्थं भूरि समर्थितः स भगवान् प्रोत्साहने मे ह्यदाद्
यद्यद् बीजमहं निधाय हृदये क्रीडामकार्षं तदा ।
तत्सर्वं तव बुद्धिगोचरमनायासं करिष्ये लिख
त्वं निश्शङ्कमिहाऽर्भकेति समभूदत्र प्रवृत्त्युद्गमः ॥

( तत्रैव, उपक्रमे श्लो० १८ )

अन्तेऽप्यमुमेवार्थमुपसंहरन् कविरयमाह—

एवं स्वीयजनाऽवनव्यसनया सन्मानतः पूर्णया
कामीव प्रियया द्रुतं सदयया स्वेष्टे नियुक्तः प्रभुः ।
कृत्वा कार्यमभीष्टकं निजजनैरानन्दितैरादृतो
द्वार्वत्यां मुदितो वसन्निजजनै रेमे सरामश्चिरम् ॥

( तत्रैव, उपसंहारे श्लो० ७४ )

एतेन ग्रन्थस्यास्य प्रणयनोद्देश्यः सुस्पष्टो जायते ।

## ग्रन्थकर्तुः परिचयः

भक्ति-रसायन-महाकाव्यस्य महाकविरयं श्री हरिसूरिनामा 'हरिबाबा शास्त्री' इति लौकिक्या व्याहृत्या प्रथितो गोदावरीतीरस्थित'नासिक'-नगराभिजनो भगवद्भक्तिसुधासागरान्तस्तलस्पर्शी दर्शनाटवीविहरणपञ्चाननः कविता-वनिता-स्वयंवृतो दयितोऽयं महानुभावः सहृदयानां पुरो ग्रन्थरूपेण उपतिष्ठते । बहुश्रय-

तितेऽपि अद्यावधि समग्रं सुव्यवस्थितं च महाकवेरस्य जीवनवृत्तमस्माभिर्नावगतम् । यद्यपि स यत्नः पुनरग्रे धावत्येव, तथापि अद्य किल तेषां ग्रन्थसाक्ष्येण तदीयतनुजनुषा लिखितया ग्रन्थस्यास्य प्रथमसंस्करणप्रस्तावनया च यावद् वृत्तमवगम्यते, तावदेव पाठकेभ्यः सप्रश्रयमुपायनीकृत्य सन्तोषलाभाय विवशा वयम् ।

तत्र महाकवेस्तनूजः श्री एकनाथशर्मा लिखति—

> 'अयं च प्रबन्धः एकोनषष्ठ्यधिक-सप्तदश ( १७५९ ) परिमिते शालिवाहनशके एतत्कविना निर्मित इत्यनुमानतो भाति । तदनु नातिचिरणैव तस्मिन् तादृशे कविवरे श्रुतिप्रतिपादितकाव्यफलमनुभवितुं दिवमुपगतवति स किलायमेतावन्तं कालमतिरुचिरोऽपि प्रबन्धो महत्तरतया सञ्जातलिप्सैरपि रसिकजनैरधनतया नाधिगतो विरलप्रचारतामयासीत्' इति ।

एवञ्च १७५९ मिते शाके लिखितोऽयं प्रौढतमो ग्रन्थस्तदा ग्रन्थकर्तुरन्यूनं त्रिशद्वर्षवयस्कतां निर्विचिकित्सं सूचयति । एवञ्च शालिवाहनीयायाः अष्टादशशताब्द्याः द्वितीये, चरणे ( ईशवीय···एकोनविंशति···शताब्द्या द्वितीयेचरणे ) महाकवेरस्य जन्म सिद्ध्यति । गोदावरीतीरस्थ-नासिकनगरनिवासी दाक्षिणात्यब्राह्मणः काश्यपगोत्रीयश्चायम् । भीमतनूजः श्री शिवरामोऽस्य जनकः । मातुर्नाम नावगम्यते । ग्रन्थकर्त्रा श्री रामकृष्णो दैशिकवर-रूपेण नुतः । गुरु-रूपेण पद-वाक्य-प्रमाण-पारावारीणो योग-वेदान्तविद् बालकृष्णोऽप्यनेन नमस्क्रियते । प्रेमरसनिक्षेपभाजनत्वेन श्री धुण्डिराजोऽपि परगुरु-रूपेण नमस्यत इति सर्वश्री रामकृष्णबालकृष्ण-धुण्डिराजाः किल त्रयोऽस्य ग्रन्थकर्तुर्गुरवः सिद्ध्यन्ति । श्री एकनाथशर्मा पितरं विशिष्य अग्रे लिखति—

> 'यदृच्छागतार्थिवृन्द - प्रार्थितवितरणाऽशेषाचीर्ण - निजनिर्वहणो-ऽनधिगत-धनिकजनकार्पण्याचरणः, सदाचरणः, श्रीमद्रमारमण-चरणारविन्द-भ्रमरायमाणाऽन्तःकरणः, सुचिर-परिचरणाभिनन्दितेन्दिराधीशलब्ध-स्वाभीष्टकाव्यकरणप्रेरणः, सुदुस्तरसाहित्यार्णव-मन्दरायमाणो, भगवद्गुणवर्णनं परमपुरुषार्थं मन्यमान-स्तदेकपूर्णकरणामेव कामयमानस्तत्र भवान्·· काश्यपकुलतरणिः श्रीमान् हरिनामा महाकवि ···।'

तथा च कविरयं पूर्वमतीव धनधान्यसम्पन्नः सन्नपि दाने परमोदारः, स्वाभिमानी, महाविष्णोरुपासनया लब्धकाव्यशक्तिश्चासीत् । एतेषां प्रथिताः प्रेष्ठशिष्यवराः 'होशिङ्गे'-त्युपाभिधानाः 'गोविन्दबोबा गोस्वामी'ति-प्रसिद्धपूर्वाश्रमनामधेयाः, ततः परं श्रीमत्-'तारकाश्रम स्वामि'-नाम्ना काश्यादिषु सुख्याताः, नारदीय-सङ्कीर्तन-सम्प्रदायाचार्यवर्या आसन् । एते हि स्वामिपादाः सङ्कीर्तनकलायाः सविशेषकौशलेन समाकृष्टैस्तत्कालीन-'ग्वालियर'-राज्याधीशैः

सप्रश्रयं समर्पित-बहुमूल्य-रत्नमौक्तिककण्ठहाराः, तस्यैव च विनिमयेन काशिक-'श्रीराधाकृष्ण-मन्दिर' ( गङ्गामहल )-'तारक-मठ'-निर्मितिमुखेन सुस्थिरीकृत-भावुक-परमहंसयतिवराधिष्ठानाः, कीर्तनकलासु सुविद्याऽन्तेवासिप्रतिष्ठापनेन अद्यापि परिजीवित-नारदीयकीर्तनसम्प्रदायाः काशिकैर्भक्त्या प्रातः स्मर्यन्ते। श्रूयते यत्कविना संग्रथ्य महाकाव्यमिदं स्वामिपादेभ्य एतेभ्यः पूर्वाश्रमे समग्रं पाठितमपि। केचन महाकविममुं धर्मसिन्धुकर्तुः श्री काशीनाथोपाध्यायस्य अनुजं मन्वते, परं नात्र प्रबलं साक्ष्यमस्माभिरद्यापि लब्धम्।

सत्यप्येवं महाकविरयमतीव विनीत इति तस्यैव निम्नलिखितैः श्लोकैः सुस्पष्टम्—

वेदाऽज्ञेयप्रमेयाऽद्भुत - चरिततरो - र्बीजनिर्णेतुकामं
दृष्ट्वाऽल्पं मामनल्पं परिहसतु जनो बाढमाश्चर्यचित्तः।
सर्वान्तर्यामितां स्वां स्वयमथ विहितामस्य तत्र प्रवृत्तिं
स्मृत्वा नित्यं प्रसन्नो भव भुवि भविताऽस्मीश तेनैव धन्यः॥

न भावो विभावोऽनुभावो न रीति-
र्न चाऽलङ्कृतिर्बोधिका किन्तु साध्व्याः।
रमण्याः स्वभर्तुर्यथा प्रीतिरेका
सुवाण्यास्तथा मेऽस्त्यतोऽहं कृतार्थः॥

श्रीमच्छ्रीनाथ - पादाम्बुज - रसविलसन् - माधुरीसाधुरीति-
प्रख्याताखर्वगर्वा यदुपतिरमणो - तोषणीयं सुवाणी।
स्वात्मानं सत्कृतार्थं कलयितुमखिलानन्दभाजं प्रवृत्ता
चित्रे श्रैशे चरित्रे न पुनरणुतरो हेतुरत्राऽभिमानः॥

( तत्रैव, उपक्रमे श्लो० १९; उपसंहारे श्लो० ७६, ७५ )

एतेन संक्षिप्तचरितेन सहृदयैरस्य महाकवेः यावद् व्यक्तित्वमवगन्तुं शक्यं तावदवगन्तव्यम्। अधिकं तु ग्रन्थरत्नस्यास्य अन्तःप्रवेशेन तैः सहजत एवाव-गन्तुं शक्यते इति कृतं तत्र मुधा प्रयासेन कल्पनाप्रभवेन।

### बहिरङ्गाऽन्तरङ्ग-परीक्षणे

इतः परं समासतोऽत्र ग्रन्थस्यास्य बहिरङ्गाऽन्तरङ्गपरीक्षणे प्रस्तूयेते। तत्र बहिरङ्गपरीक्षणे प्रस्तुते स्फुटं दृश्यते यदयं भागवत-दशमस्कन्ध-पूर्वार्धगत-श्रीशलीलाबीजान्वेषको ग्रन्थः अध्यायसंख्यादृष्ट्याऽपि मूलग्रन्थपूर्वार्धाध्यायसंख्याम् एकोनपञ्चाशन्मितामेव तुलयति। अर्थादयमपि ग्रन्थ एकोनपञ्चाशदध्यायेष्वेव ( ४९ ) विभक्तः। भागवते भगवल्लीलानां यः क्रमः, स एवात्रापि प्रत्यध्याय-मवलम्बितो ग्रन्थकृता। भागवत-दशम-स्कन्ध-पूर्वार्धगतानां श्लोकानां संख्या

२०१३ वर्तते । एतेषु ११२० श्लोकानामेव प्रतीकान्यादाय ग्रन्थकृताऽयं ग्रन्थो ग्रथितः । अर्थात् प्रतिशतं ·५५ मिता भागवतश्लोका ह्यत्र व्याख्याताः । इतोऽन्यत् कुत्र कुत्रचन एकस्यैव श्लोकस्य एकाधिकानि प्रतीकान्यादाय ग्रन्थकृता स्वीया उद्भावनाः प्रकटिताः । तेषां संख्या नात्र परिगणिता । निम्नलिखितया सारण्याऽस्य विवरणं सुस्पष्टम्—

| अध्याय संख्या | भागवत श्लोकसंख्या | भक्तिरसायन श्लोकसंख्या | अध्याय संख्या | भागवत श्लोकसंख्या | भक्तिरसायन श्लोकसंख्या |
|---|---|---|---|---|---|
| १ | ६९ | २८ | २६ | २५ | ५ |
| २ | ४२ | १४ | २७ | २८ | २० |
| ३ | ५३ | २२ | २८ | १७ | ११ |
| ४ | ४६ | १० | २९ | ४८ | १३ |
| ५ | ३२ | ७ | ३० | ४२ | ३१ |
| ६ | ४४ | १३ | ३१ | १९ | १९ |
| ७ | ३७ | १५ | ३२ | २७ | २० |
| ८ | ५२ | २२ | ३३ | ४० | ३७ |
| ९ | ३३ | १८ | ३४ | ३२ | १७ |
| १० | ४३ | ३० | ३५ | २६ | १४ |
| ११ | ५९ | २९ | ३६ | ४० | २८ |
| १२ | ४४ | २६ | ३७ | ३४ | १८ |
| १३ | ६४ | २६ | ३८ | ४३ | २३ |
| १४ | ६१ | २५ | ३९ | ५७ | ३२ |
| १५ | ५२ | २४ | ४० | ३० | ७ |
| १६ | ६७ | ३६ | ४१ | ५२ | ३२ |
| १७ | २५ | १२ | ४२ | ३८ | २५ |
| १८ | ३२ | १५ | ४३ | ४० | २२ |
| १९ | १२ | १६ | ४४ | ५१ | २६ |
| २० | ४९ | ४३ | ४५ | ५० | ३४ |
| २१ | २० | १६ | ४६ | ४९ | २८ |
| २२ | ३८ | २५ | ४७ | ६९ | ४५ |
| २३ | ५२ | ४२ | ४८ | ३६ | २६ |
| २४ | ३८ | २१ | ४९ | ३१ | २५ |
| २५ | ३३ | २१ | | | |
| | | | योग ४९ | २०१३ | ११२० |

लीलाः पुनर्भागवतोक्ता एवेति तासां विषये पृथक् वक्तव्यं नापेक्षते ।

श्लोकाश्चैते नैकैश्छन्दोभिः ग्रथिताः, यद्यपि बाहुल्यं तत्राऽनुष्टुब्-छन्दस एव वक्तुं शक्यते। द्वात्रिंशाध्याये गोपीगीत-प्रसङ्गे 'सभाजयित्व'ति ( भाग० १०.३२.१५ ) श्लोकप्रतीकमुपादाय उद्भावनाः प्रकटयता ग्रन्थकृता स्वं स्वं वृत्तमहानुभूतमखिलाः प्रख्यापयन्त्यस्तदा इत्युक्तम् । ततस्तेन 'छन्दोमञ्जरी'-माश्रित्य ६१ एकषष्ठिवृत्तेषु तत्तद्-वृत्तनामोल्लेखपूर्वकं गोपीनां नैकाः पेशलाः भावाः महता रचनाकौशलेन ग्रथिताः । वृत्तानामेषां सर्वेषां नामानि यथा—

१. कन्या, २. स्त्रीजनपङ्क्तिः, ३. सोमराजी, ४. मदलेखा, ५. विद्युन्माला, ६. प्रमाणिका, ७. मणिमध्यम्, ८. भुजङ्गसङ्गता, ९. मत्ता, १०. शालिनी, ११. इन्द्रवज्रा, १२. रथोद्धता, १३. उपेन्द्रवज्रा, १४. उपजातिः, १५. सुन्दरी, १६. कनकमञ्जरी, १७. स्वागता, १८. पद्मिनी, १९. भ्रमरविलसितम्, २०. वातोर्मिः, २१. अनुकूला, २२. वंशस्थम्, २३. द्रुतविलम्बितम्, २४. प्रमिताक्षरा, २५. मालती, २६. तामरसम्, २७. कुसुमविचित्रा, २८. मणिमाला, २९. जलधरमाला, ३०. भुजङ्गप्रयातम्, ३१. चन्द्रवर्त्म, ३२. इन्द्रवंशोद्भवता, ३३. जलोद्धतगतिः, ३४. प्रहर्षिणी, ३५. रुचिरा, ३६. चण्डी, ३७. चन्द्रिका, ३८. सुकलहंसः, ३९. सुप्रबोधिता, ४०. मञ्जुभाषिणी, ४१. पुष्पिताग्रा, ४२. मत्तमयूरा, ४३. वसन्ततिलका, ४४. वासन्ती, ४५. नान्दीमुखीयम्, ४६. मालिनी, ४७. आत्मतूणकम्, ४८. चित्रम्, ४९. मदनलालिता, ५०. भाराक्रान्ता, ५१. मन्दाक्रान्ता, ५२. पृथ्वी, ५३. हरिणीप्लुतम्, ५४. शिखरिणी, ५५. कुसुमितलता, ५६. शार्दूलविक्रीडितम्, ५७. शोभाकीर्तिः, ५८. स्रग्धरा, ५९. महामदिरा, ६०. आर्या, ६१. गीतिश्च ।

आलङ्कारिकदृष्ट्या विचार्यमाणे ग्रन्थेऽत्र श्लेषस्य तदनुप्राणिताया उत्प्रेक्षायाश्च अतितरां प्राचुर्यं पदे पदे परिदृश्यते। अतिशयोक्तिरपि बहुशो दृश्यते। अन्येऽप्यलङ्कारास्तत्र तत्र कविना विभूषिताः। रस-भावादिध्वनीनामपि तत्र तत्र विलसितं चेतश्चमत्करोति । तेषामुपष्टम्भने च कवेः पेशलं प्रकृतिनिरीक्षणम्, शास्त्रमर्मज्ञता, प्रसाद-गम्भीरता, पुरैतिह्यविज्ञता, भक्तप्रवणता-प्रभृतिविषयिण्य उद्भावनाः महाकाव्येऽस्मिन् कामप्यभिख्यां स्फूर्जयन्ति । प्रत्येकशस्तेषामुदाहर-

णानि समुपस्थापयितुं नात्रावसर इति कृत्वा समासत इदं वक्तव्यं भवति यदनेन महाकविना काव्यभाण्डारे बहुमूल्यो निधिः समर्पित इति ।

प्रपायाः तृष्णा-निवर्तकत्वम्

भक्तिरसायनमिदं १७९५ शकाब्दे मुम्बापुरीस्थे 'गणेश कृष्णाजी यन्त्रालये' मुद्रापितमासीद् ग्रन्थकर्तुस्तनुजनुषा एकनाथशर्मणा। पत्रात्मकं तदधुना लुप्तप्राय-मिव भवन्नासीत्। कर्गजादिकं गलितप्रायं संवृत्तं यत्र क्वचन समुपलभ्येत। इदन्तु स्वीकुर्मो यदित्थं मुद्रणक्षेत्रे लुप्तप्रायमप्येतद् निखिलभागवतचिन्तकानां चेतस्सु स्फूर्तिरूपेण त्रिकालं विराजत एव। संस्करणेऽस्मिन् सुविद्येन ग्रन्थकर्तुस्तनूजेन विषमस्थलेषु श्लिष्टशब्दानामर्थस्फोरणं नूनं कृतमस्ति। तथापि विलक्षणया प्रौढ्या तन्मर्माऽऽकलयितुं कश्चनाऽवलम्बः समपेक्षित एवासीत्।

ग्रन्थस्यास्य सम्पादन-समये सौभाग्यादकस्मात् श्री भुवनेश्वरशास्त्रि दातार-महाभागा मिलिताः। चर्चायां तैः कृपया स्वतातपादैः स्वनामधन्यैः पण्डितप्रवर-श्री माधवशास्त्रि दातार महोदयैः स्वीयपठन-मननसमये लिखितं भक्तिरसायनस्य एकं पुस्तकमसमभ्यं प्रदत्तम्। तत्र पुस्तकस्य रिक्तपार्श्वेषु नैकेषां श्लोकानां शास्त्रिपादैः टिप्पण्यो लिखिता आसन्। अस्मन्मित्रवराणां श्री जगन्नाथशास्त्रि तैलङ्ग, एम० ए०, साहित्याचार्याणामसाधारण्येन साहाय्येन ताष्टिप्पण्यः पृथक् विलिख्य सुसंयोज्य 'प्रपा'रूपेण सादरमुपायनीकुर्वन्तो वयं महान्तं प्रमोद-मनुभावामः।

नून प्रपया बहुत्र मूल-भक्तिरसायन-ग्रन्थस्य सुगूढं हार्दं मूर्तिमत् जायते। 'गोकुलकलानिधि'-प्रभृतीनां नैकेषां भक्तिग्रन्थानां सरसान्युदाहरणान्यपि प्रकृत-प्रकरणोपष्टम्भकानि शास्त्रिपादैरत्र समुट्टङ्कितानि। अनेकत्र च स्वयंस्फूर्ता उद्भावना अपि 'इति माधवः' इति सङ्केतेन तैरुट्टङ्किताः। शास्त्रिपादानां पारम्परीणं भागवततत्त्वार्थ-वैदुष्यमेव एतादृशेऽद्भुते ग्रन्थ-ग्रन्थिविमोचने प्रभवति।

प्रपाख्या टिप्पणीयं भक्तिरसायन-महाकाव्यस्य ४५४७ संख्यकश्लोकेषु मध्ये १९२३ श्लोकानामेव प्रतीकान्यादाय शास्त्रिपादैः कृता। अर्थात् प्रतिशतं ४२ द्वाचत्वारिंशन्मिताः भक्तिरसायनश्लोकाः प्रपया विभूषिताः। तेषां विवरणं निम्नलिखितसारिण्या सुस्पष्टम् —

| अध्याय | भक्ति० | प्रपा | अध्याय | भक्ति० | प्रपा |
|---|---|---|---|---|---|
| १ | ५४ | २५ | २६ | २४ | १२ |
| २ | ४७ | १६ | २७ | ८२ | ३१ |
| ३ | १९१ | ५४ | २८ | ३८ | १४ |
| ४ | २१ | १४ | २९ | १५१ | ६३ |
| ५ | १५ | ६ | ३० | २९९ | ८० |
| ६ | ५३ | २२ | ३१ | ३३८ | ९५ |
| ७ | ४५ | २३ | ३२ | २१८ | ८१ |
| ८ | ९२ | ३३ | ३३ | १८९ | ९८ |
| ९ | ८७ | ३५ | ३४ | ५२ | ३२ |
| १० | ८४ | २४ | ३५ | ५० | ३४ |
| ११ | ७८ | ३३ | ३६ | ८२ | ४६ |
| १२ | ९६ | ४० | ३७ | ६७ | २७ |
| १३ | ८७ | ३६ | ३८ | ७३ | २९ |
| १४ | ६२ | ३६ | ३९ | १०५ | ५१ |
| १५ | ७८ | ३५ | ४० | १८ | ७ |
| १६ | ९९ | ४४ | ४१ | १२६ | ४५ |
| १७ | ४५ | २२ | ४२ | १०५ | ४५ |
| १८ | ४६ | २२ | ४३ | ७४ | ३९ |
| १९ | ५७ | २३ | ४४ | ५२ | ३४ |
| २० | ८० | ३१ | ४५ | ११३ | ४८ |
| २१ | ३६ | १९ | ४६ | १३१ | ५० |
| २२ | १०० | ४४ | ४७ | १९३ | ७६ |
| २३ | १०१ | ५२ | ४८ | ९६ | ४६ |
| २४ | ६६ | ३३ | ४९ | ७३ | ४६ |
| २५ | १६० | ६५ | | | |
| | | | योग ४९ | ४५४७ | १९२३ |

इत्थं ग्रन्थकृतस्तनूजानां शब्दार्थप्रकाशिकया टिप्पण्या शास्त्रिपादानाञ्च प्रपया सर्वथा प्रौढस्य व्याख्यानसापेक्षस्य मूलमात्रस्य महाकाव्यस्यास्य तात्पर्यावगमे नूनं भूयशः साहाय्यं भवेत् सहृदयरसिकाणामित्याशास्महे। पूज्याः अनन्त-श्रीविभूषिताः श्रीमदखण्डानन्दस्वामिपादाः पुनरस्य ग्रन्थस्य चिरात् परिशीलयि-तारः। चिरादलभ्यतां गतमिदं महाकाव्यं तेषामेव प्रातःस्मरणीयपादानां महा-

भागवतानां परमया कृपया प्रकाशपदवीं गच्छति । राष्ट्रभाषायामपि कियानस्य भागस्तैः वहो कालात्पूर्वं पूर्वाश्रमे व्याख्यात इत्यपि श्रूयते । परं स केनापि कारणेन इदानीं दृष्टिपथं नायातीति महद्वैरस्यावहम् । तथापि साम्प्रतं ग्रन्थगताः कियतीः प्रातिस्विकीः लीलाः समादाय राष्ट्रभाषीयनिबन्धरूपेण व्याख्यानक्रमस्तत्प्रकाशन-क्रमश्च तेषां प्रचलतीति सन्तोषविषयः । तदिदं तेषामद्यावधिकभागवतगूढमननोपस्कृतं भक्तिरसायनानुसारि लीलाव्याख्यानक्रमं दर्शं दर्शं दृढमाशास्महे यत्ते कियता कालेन समग्रस्यापि ग्रन्थस्य व्याख्यामृतपायनेन राष्ट्रभाषाप्रणयिनोऽपि सहृदयान् नूनमाप्याययिष्यन्तीति ।

उपसंहारः

भक्तिरसायनाख्यमिदं महाकाव्यं साहित्यनिकषे परीक्षितं सत् सर्वथा सर्वांशत-स्तप्तकाञ्चनतां बिभृयादित्यस्माकं सत्यपि दृढे विश्वासे विज्ञाः साहित्यार्णवोन्मज्ज-नावदातान्तःकरणाः परीक्षका एव प्रमाणम् । भक्तिभावानां नूत्नतमानामुद्भावनानां विषये पुनः भगवत्कृपाकटाक्षवीक्षिताः भावुकाः भक्ता भागवता व्यासाश्चैव प्रमाणम्, यैर्हि यथाकथञ्चन स्वीयमननेषु ताः सङ्कलय्य श्रोतारो रसाप्लुता विधी-यन्ते । वयं पुनरेतादृशस्य महाकाव्यस्य साहित्यिकमूल्यमापनाय साम्प्रतिकान् शोधप्रणयिनो विदुषो निमन्त्रयामः । तेषामत्र दृष्टिरावर्जिता चेत् कवेर्गूढा भावा-स्तद्गुम्फनचातुरी चापि प्रकाशपदवीमुपगच्छेत् । परमेतस्य कृते भगवतो निरुपाधिकी कृपा, भक्तिप्रवणता, दर्शन-साहित्यादि-सर्वशास्त्रवैदुष्यं, सहृदयता चेति सामग्रीजातमनिवार्यमेव भवेत् । आशास्महे यदत्र विद्वांसोऽवधास्यन्तीति ।

चिरादलभ्यतां गतमिदं महाकाव्यं प्रातःस्मरणीयैः सर्वतन्त्रस्वतन्त्रवैदुष्यैः अनन्तश्रीविभूषितैः अखण्डानन्द सरस्वति स्वामिपादैः परमया कृपया प्रकाशपदवी-मासादयितुं स्वीयः सक्रियः सफलश्च आशीर्वादः प्रदत्तः, प्रकाशनव्यय-निर्वह-णाय च श्री सेठ केवलराम घनश्यामदास चैनराम उत्तमचन्दानी सर्मापित-निधि-प्रमुखाश्च प्रेरिताः, अयं जनश्चापि मार्गदर्शनपुरस्सरमस्य पुण्यतमस्य ग्रन्थस्य सम्पादनकर्मणि नियोजितस्तदर्थं तेषां कियतीं निरुपाधिकीं कृपामुपश्लोकयाम इत्येव न ज्ञायते । करुणावतारांश्च तान् सादरं प्रणम्यैव कृतज्ञता-ज्ञापने प्रभवामो वयम् । निधिप्रमुखाश्च एवमेव सद्बुध्या संयुक्ताः षट्सु षट्सु मासेषु शुभानि कर्माणि कुर्वन्तः उभयलोकं जयन्त्विति नः शुभाशंसा ।

प्रपा-निर्मातारः पूज्य श्री माधवशास्त्रि दातारपादान् पुनरस्मिन् शुभे प्रसङ्गे सादरं प्रणम्य स्वीयां कृतज्ञतामभिव्यञ्जयामः । प्रपायाः सम्पादनेऽस्माकं परम-सुहृदः कविवर-श्री जगन्नाथशास्त्रि तैलङ्गान् ( एम० ए०, साहित्याचार्यान् ) अपि केवलं साधुवादान् वितीर्य तेषां बहुमूल्यसहयोगभरमपनेतुं मनागपि न

वाञ्छामः। वस्तुतस्तैः शास्त्रिपादानामिदं टिप्पणं पृथक् विलिख्य, सावहितं मूलश्लोक-तात्पर्यादिभिः सङ्गमय्य टिप्पणीरूपतां च परिणमय्य प्रदत्तम्। अत एवैषा प्रपा प्रकाशनपदवीमारोढुं क्षमाऽभवत्। अन्यथा नूनमिदं दुश्शकमासीत्। एवमेव शास्त्रिपादानां ज्येष्ठतनूजाः श्री भुवनेश्वरशास्त्रिणोऽपि धन्यवादार्हाः। प्रकाशनावसरे मम विविधकार्यव्यस्तताकृतमक्षम्यं विलम्बमपि सर्वथाऽपरिगणयन्तः प्रकाशनाय च सर्वविधसौविध्यवितरणेन निरतिशयसौहृद्यमभिव्यञ्जयन्तः आनन्दकानन-मुद्रणालयाध्यक्षाः श्री विश्वम्भरनाथ द्विवेदपादाः, सीसराक्षरयोजकाश्च श्री श्रीराम प्रभृतयश्च कथं विस्मारणीयाः स्युर्धन्यवादप्रदानस्यास्मिन् शुभेऽवसरे।

उपान्त्ये गुणैकपक्षपातिनो विद्वांसः सहृदयाः प्रार्थ्यन्ते यदत्र ये केचन दोषाः स्युस्तान् मदीयानेव मत्वा परमोदारतया द्वितीयसंस्करणे परिष्करणाय सूचनपुरस्सरं रसायनमिदं स्वयमाकण्ठं पिबन्तः परानपि सहृदयान् भक्तान् पाययन्तो ग्रन्थकृतः श्रमं सफलयन्तु। अन्ते च ये केऽप्यत्र शुभे कर्मणि अस्माकं लेशतो सहायकास्तेभ्योऽपि समासतो साधुवादान् वितीर्य श्रीशं श्रीकृष्णाख्यं परं ब्रह्म प्रणमामो येनाऽस्माकं चेतसि समारुह्य अस्मद्दुर्बलहस्त-बुद्धितः इदं पावनं कार्यं कारितम्।

# भक्ति-रसायन-प्रपा

( विषमस्थल-टिप्पणम् )

●

काशिक-भागवतमर्मज्ञैः
श्री माधवशास्त्रि दातारैः
समुद्भासिता

भक्तिरसायन-महाकाव्यस्य प्रमुखान् श्लोकानादाय तत्र तत्र स्थितं गूढग्रन्थिजातं विवरितुं श्रीमतां माधवशास्त्रि दातार पादानामयं स्वान्तः-सुखाय यत्नः प्रायश्चत्वारिंशद्वर्षपूर्वमभवत् । तेषां पुस्तकमादाय तत्रस्थं टिप्पणमिदं ग्रन्थस्यास्य पृष्ठ-श्लोकसंख्या-निर्देशपूर्वकमत्र समुपस्थाप्यते । पृ० इत्यनन्तरं पृष्ठसंख्या ज्ञेया । ततः परतरा संख्या श्लोकस्य । अध्यायनिर्देशश्च उपर्येव प्रत्यध्यायं सूचितः । इत्थमिदं टिप्पणं गूढतरस्य मूलग्रन्थस्य सलापने महत् साहाय्यं विदध्यादित्याशास्महे ।

—सम्पादकः

॥ श्रीगणेशाय नमः । जय देवि दुर्गे ॥

# भक्ति-रसायन-प्रपा

## मङ्गलाचरणम्, उपक्रमश्च

पृ० ३. १५. ग्रन्थकारः ''नभः पतन्त्यात्मसमं पतत्रिण' इति न्यायेन स्वसौख्याय लेशलेशवर्णनं करोमी'त्याह—कृत्स्नमिति। कृत्स्नमीशचरितं प्रादातुं नालम्, यतः अन्तोज्झितं तत्। 'अमल'मित्यत्र 'अतुल'मित्यपि पाठान्तरम्। आब्रह्माचलम् आमेरुम्। गोदायाः इत्यत्र गङ्गाया इति पाठभेदः।

पृ० ४. १७. प्रतिज्ञा तु कृता, परं कथमेतत् सम्भवति ? यतः—'देवेति'। अर्जुनः कार्तवीर्यः।

२१. 'श्रीमद्भागवतश्रवणं विना न मुक्तिरि'त्याह ग्रन्थकारः—अन्याभिरिति। यच्छ्रुतिरेव भागवतश्रवणमेव।

२२. 'प्रथमभक्त्यङ्गं श्रवणं कुर्वाणो राजाऽपि वन्द्य' इत्याह—युक्ताहारेति। तन्मुनिवामदेववत् तस्मात् मुनिवामदेववत्। असौ परीक्षित्।

## प्रथमोऽध्यायः

पृ० ५. ३. सर्वप्रियं श्रीकृष्णचरितमित्याह ग्रन्थकारः—यत्ताशस्येति। यत् वस्तु स्त्र्यादि। यद्वस्तु कथाश्रवणादि। इह अस्मिन्। अवतारचरिते श्रीकृष्णावतारचरिते। द्वयोः कामियोगिनोः। को हेतुः ?—हेतुस्तत्रेति।

पृ० ६. ६. क्षुत्तृण्णिवर्तिकां भागवतीं कथां को मुमुक्षुर्न शृणुयात् इत्याह—येति। क्षतिं नाशम्। एति प्राप्नोति।

८. 'सम्यक्' ( १०.१.१५ )इत्युक्तौ कारणम्—तत्त्वरूपादपीति।

९. मुख्यं कृष्णावतारप्रयोजनं किम् ?—इच्छामात्रत एवेति। स्वमात्राश्रितान् अनन्यभक्तान्।

१०. द्वयोरुत्साह उचित इत्याह—तत इति। ततः हेतोः। तच्चरितं कृष्णचरितम्। तव राज्ञः।

पृ० ६. ११. श्रीकृष्णं प्रार्थयति ग्रन्थकारः—ब्रूत इति । कुतः पूताः स्युः ? यतः तत्तादूप्यसन्दर्शनीति ।

'योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्दनः ।
स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥'

इत्याद्युक्तेः श्रीकृष्णरूपप्रकाशिकेति भावः । मुनेः शुकस्य ।

पृ० ७. १३. किमिति ब्रह्माणं प्रार्थितवती भूमिः ?—प्रेयानपीति । तदन्तरङ्ग स्वपतिप्रियम् ।

१४. यद्वा—तेनेति । तातेनेति । 'अद्भ्यः पृथिवी' इति श्रुतेः सागरस्य जनकत्वम् ।

१५. भूरिभारमिति । भारः 'तुलाः स्त्रियां पलशतं भारः स्याद् विंशतिस्तुलाः' इत्युक्तः परिमाणविशेषः गुरुत्वञ्च ।

१६. गोरूपधारणे कारणम्—गोजातेति । शतगूल्लसितेति । शतगूः सूर्यः, तेन उल्लसितः अधिवासः वासस्थान कमलं यस्य तम् । तदनुरक्त्यभिलाषिणी ब्रह्मणः प्रेमाभिलाषिणी ।

१८. पयोनिधौ आगमनेन सूचितमर्थमाह—लोक इति । असौ ब्रह्मा ।

पृ० ८. २०. ब्रह्मणः शीघ्रगमनेन सूचितमर्थमाह—सापत्नेति । असौ भूः ।

२३. यद्वा—रत्नगर्भेति ।
रुद्रसाहित्ये कारणम्—( सत्रिनय इति ) ।

२४. भक्तेति । तेन ब्रह्मणा । पुरः अग्रे । शक्त्या स्वकालस्थया । 'स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद् भुवि' इत्यादिना प्रोक्तमित्यन्वयः ।

पृ० ९. ३०. प्रभुविचारमाह—धरेति । विधेयः कार्यः ।

'सुरस्त्रियः' इत्युक्तेः कारणम्–( वसुदेवेति: १०.१०.२३ ) ।

३२. सर्वैश्वर्येति । स्वोपकृतावनालसमनाः स स्वस्मिन् रसायाः पृथ्वीदानेन यदुपकृतं तस्य अवने पालने अलसयुक्तं मनः चित्तं यस्य सः । आकल्प्य सम्पाद्य । उपदाम् 'नजराना' इति भाषा । बालस्य अग्रतो भवने कारणम्—( वासुदेवेति : १०.१०.२४ ) । विवाहकथोपक्रमे कारणम्—( शूरसेनेति : १०.१०.२७ ) ।

पृ० १०. ३५. श्रीमदिति । महाविवाहः विष्णुः, महाविः गरुडः वाहो यस्य सः । अशरीरिण्यां देववाण्यां कारणम्—( पथि प्रग्रहिणमिति १०.१.३४ ) ।

पृ० १०. ३७. अद्भीतिरिति। त्रिधिबलात् भाग्यबलात्। शिक्षकेन शासकेन। सः प्रथमं भीतः। गतभीरित्यनन्तरं सन्निति शेषः। गतसाध्वसं यथा स्यात्तथा।

३९. अष्टमस्यानिष्टत्वमाह—जगद्गुरुरिति। मन्दरसानुकूलः मन्दा भारेण अलसा या रसा पृथ्वी तस्याः अनुकूलः, मन्दस्य रसः वीर्यप्रभावः अनुकूलो यस्मात् स इति वा। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः।' असावनिष्टोऽष्टम एवेति। ज्योतिःशास्त्रे हि उक्तम्—

'द्वादशाष्टमजन्मस्थाः शनिरङ्गारको गुरुः।
कुर्वन्ति प्राणसन्देहं देशत्यागं धनक्षयम्॥' इति।

४०. पथ्य ब्रूयादित्याह—श्रोतेति।

पृ० ११. ४१. वसुदेवकृत्या सूचितमर्थमाह—नैतदिति। यत्ने कृते सतीति।

'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः',
'उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥'

'इत्यादिवचनानि अत्र प्रमाणानि।

४२. साधु-विद्वत्-कदर्थ-जितेन्द्रियाणां क्रमेण लक्षणमाह—साधुरिति। उक्तञ्च—

'बार्हस्पत्यसवैनात्र साधुवैं दुर्जनेरितैः।
दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः॥'
'न तथा विध्यते बाणैः पुमान् बाणैः सममर्गैः।
यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः॥' इति।

नारदः नीतिं कामनुसृत्यैतदुक्तवान्?—( नन्दाद्या इति: १०.१.६२ )

४५. यदिति। तद्विनाशे तस्य सहायकस्य विनाशे।

पृ० १२. ५०. उभयोर्निग्रहेण सूचितमर्थमाह—यो हन्तीति।

५१. प्रभुप्रेरणयैन तथा जातमित्याह—लोकोत्तरमिति। आनन्दयिष्यन् अग्रे इति भावः।
कंसचरितात् सूचितमर्थमाह—असुधेति।
उग्रसेनस्यापि निग्रहे कारणम्—( उग्रसेनमिति: १०.१.६९ )
उग्रसेनोऽपीति॥ १॥

## द्वितीयोऽध्यायः

पृ० १३. अन्यदेशगमने कारणम्–( ते पीडिता इति : १०.२.३. ) ।

२. स्वकैरिति । कामं यथेच्छम् । अन्याऽऽशाभिमुखस्थितिः = अन्यदिगभिमुखस्थितिः, अन्येषामग्रे आशया दास्यन्ति किञ्चिदेवं रूपया अभिमुखे समुखे, स्थितिर्युक्तैवेति वा ।

४. ( अर्चिष्यन्तीति १०.२.१० ) इत्याद्युक्तेः कारणम्—कार्यं इति । तेन सत्कारेण । एवं नामकरणे कारणम्–( गर्भ सङ्कर्षणादिति : १०.२.१३ ) ।

७. किञ्चिदिति । कथम् अश्रद्धां न भजन्तु ?—कनीयानीति ।

पृ० १४. ११. अन्यच्च नामकरणे कारणम्—अशेषेति ।

१२. रामस्याऽग्रे याने कारणम्—अध्यास्यमानामिति । तदन्यतः तस्मात् स्थानादन्यत्र ।

१५. मनसि प्रवेशे कारणम्—यद् दुर्घटमिति ।

पृ० १५. १८. यद्वा कृष्णः —यौ बाहाविति ।

१९. यद्वा—अणोरणीयानिति ।

२२. यद्वा—गोपालनमिति । तस्य गोपालनस्य ।

२३. यद्वा कृष्णः —नो मयीति ।

पृ० १६. २९. आत्मज्ञानां स्थितिं बोधयति—परोपकृतीति ।

३१. भगवद्भक्तानां न कस्मादपि भयमित्याह—प्रादुर्भाव इति ।

पृ० १७. ३३. विधेरागमने कारणम्—मत्क्लेशेति ।

३६. गर्भशब्दस्य पुनःपुनः प्रयोगे कारणम्—गर्भादीति । सन्धां प्रतिज्ञाम् ।

पृ० १८. ४०. ब्रह्मा—भवाब्धीति । सज्जन इति । सज्जनः 'निगमागमेषु भवाब्धितरणे कृष्णपादाम्बुजं तरिरि'ति विभाव्य समुत्सुको भवति, तद् योग्यम् । परन्त्विदं मया विचित्रमवलोकितम् । किं तत् ? यस्य पदाम्बुजस्य अवलम्बनादाश्रयात् असौ भवाम्बुधिरपि सुलघु अत्यन्तं शीघ्रम् अलं गोष्पदावस्थितिमगादिति ।

४३. ब्रह्मा देवकीमभिनन्दति—सन्ध्यातोऽपीति । नवा स्फूर्तिमिति । स्फूर्तिं न प्राप्नोतीति सम्बन्धः । अर्धक्षणम् अर्धक्षणमपीत्यर्थः । वयं ब्रह्मादयः ।। २ ।।

## तृतीयोऽध्यायः

पृ० २०. ६. दिशां प्रसादे कारणम्—रिपुजातेति । पतिभिः इन्द्रादिभिः ।

पृ० २१. ११. आकाशप्रसादे कारणम्—हराविति ।

१३. भूम्यानन्दे कारणम्— ध्येयमिति । भव्यदया भव्यं मङ्गलं ददातीति तया ।

पृ० २२. १५. यद्वा—आयात इति ।

पृ० २३. २२. यद्वा—य इति ।

२६. नदीनां प्रसादे कारणम्—नित्यमिति । असुलभामित्यनन्तरम् अपीति शेषः । तथा प्रसन्नसलिलाः ।

पृ० २४. ३०. ह्रदप्रसादे कारणम्—कश्चिदिति । ह्रदं कालियह्रदम् ।

३५. पक्षिभ्रमरशब्दार्थमाह—तिर्यञ्चोऽपीति ।

पृ० २५. ४२. वायुः कमभिप्रायं बोधयति ?—प्रभुपदेति ।

पृ० २६. ४३. यद्वा—पुत्रेणेति ।

४४. यद्वा—युक्त एवेति ।

४६. अग्निदीप्तौ कारणम्—निस्तन्द्रमिति । धनञ्जयर्द्धिम्, धनञ्जयस्य पार्थस्य ऋद्धिम् ।

पृ० २७. ५१. यद्वा—नारायण इति ।

५३. तत्रापि शान्तत्वे कारणम्—कंसाद्यैरिति । न जातुचिदपि इत्यनन्तरं सूचयन्निति शेषः ।

५४. मनःप्रसादे कारणम्—एतावदिति । आसीदितीति इति हेतोः ।

पृ० २८. ६०. किन्नरगायने कारणम्—सन्नरेति । किन्नरावनं नलकूवरमपि । अनुसन्धं सत्यसन्धम् ।

६१. यत्संसारसुखार्थं श्रीशोऽपि जन्म स्वीकरोति, स संसारः। गन्धर्वनगरप्रख्य इति ज्ञानिनो वदन्तीति हृष्टानां गन्धर्वाणां गायने कारणम्—यत्सौख्येति । जनुः जन्म ।

६४. विद्याधरीणां नृत्ये कारणम्—विद्याप्रधानेति । विद्याप्रदानाय गीतोपदेशार्थम् । स्वस्थैकसौख्यागमसस्पृहाणां स्वर्गस्थमुख्यसौख्यप्राप्तौ सस्पृहाणाम् ।

६६. सुमनसामर्पणं युक्तमित्याह—ये वेति ।

पृ० २९. ७०. मेघगर्जनार्थमाह—मद्वस्विति । वसुद: जलद: ।

पृ० ३१. ८५. निशीथे अवतारे कारणम्—यो जागर्तीति ।

८८. यद्वा—कृष्णाष्टमीति ।

९१. रोहिण्यामवतारे कारणम्—पुत्रजन्मर्क्ष इति । पुत्रस्य ब्रह्मणः जन्मर्क्षे जन्मनक्षत्रे रोहिण्यामिति भावः ।

पृ० ३२. ९३. यद्वा—ज्येष्टत्वेऽपीति । 'पुरैवैवम्' इत्यत्र 'पुरेवैवम्' इत्यपि पाठः । पडक्षिसंमितमहातारासु सतीषु ।

९६. ( आविरासीदिति ) अगर्भेति । अन्वयमुख्यः चन्द्रः । तादृगुक्त्या आविरासीदित्युक्त्या ।

पृ० ३३. १००. प्रार्थयति वसुदेवः—किं वर्णयामीति । भक्तैकहेतुकम् भक्ता एव एकः मुख्यो हेतुर्यस्य अवतारे तत् । इयम् इयमेव ।

१०२. नैतदाश्चर्यमित्याह वसुदेवः—निराकारापीति । राकात्वम्—'पूर्णे राका निशाकरे' इत्यमरः ।

१०४. देवकी प्रार्थयति—सत्पुत्रेति । साधारणम् अन्यबालैः समम् ।

पृ० ३४. १०७. विडम्बनमपि मां सुखयतीत्याह देवकी—ततोऽपीति । खल्वितरैः दुरापम् 'यतः खलु इतरैः दुरापम् एतत्' इत्यन्वयः ।

१०८. कृष्णः प्राह—यथेति ।

१०९. ग्रन्थकारः प्राह—त्वयीति । तदा तदेव ।

पृ० ३५. ११३. 'भगवत्प्रचोदित' इत्यस्यार्थं कृष्णः प्राह—यद्गोकुलमिति । गोवलये भूमण्डले । प्रकामम् अत्यन्तम् । आविर्भवामि प्राकट्यं करोमि ।

११४. नैतदाश्चर्यमित्याह ग्रन्थकारः—यन्नामेति । अशीर्णाः दृढाः ।

११६. कैमुतन्यायेन मोहमाह—महान्तोऽपीति । यद्विमोहिताः यया विमोहिताः ।

पृ० ३६. १२३. मेघः प्राह—यथेति । अन्यच्च—क्षितिमिति ।

पृ० ३७. १३०. ईश्वरकृपया प्राप्तं धनम् ईश्वरार्पणं कार्यमित्युपदिशति मेघः—प्राप्तमिति ।

पृ० ३७. १३२. प्रथमं मेघोदकं स्वीचकार: कृष्णः, तेन किं सूचितम् ?—
कंसमिति । प्राप्नुयात् लोपमृद्धि:--'अनयेन यथा लक्ष्मी:'
इति काशीखण्डोक्तवचनम् ।

पृ० ३८. १३३. यद्वा, कृष्णः प्राह--न गोकुलेति । तत् जलरूपं वसु ।
शेषागमने कारणम्--( शेषोऽन्वगादिति ) ।
१३४. शेषः प्राह--विधायेति ।
१३५. स्वशिरःपुरस्करणे कारणम्--अतिसन्निहितेऽपीति ।
तत् तस्मात् अवद्यपद: दोषस्थानम् । अस्मिन् जगति ।

पृ० ३९. १४१. यद्वा—य इति । अत: युक्तमिति ।
१४६. यद्वा--जडेति ।
१४८. यमुनाया अपारत्वे कारणम्--सन्मानस इति । मुदम्
आनन्दम्, उद्वहन्ती धारयन्ती । सा यमुना ।

पृ० ४०. १५२. यद्वा यमुना--शौरिरिति ।

पृ० ४१. १५५. यद्वा यमुना--अनन्तेति ।
१५६. कृष्णा शङ्कां परिहरन्ती तथाऽऽस इत्याह--अगाध इति ।
१५७. मार्गदाने कारणम्—लोक इति ।
१६३. यद्वा यमुना प्राह—मत्सखीति ।

पृ० ४२. १६४. यद्वा--भगवतीति ।

पृ० ४३. १७१. ग्रन्थकार: प्राह--सिद्ध एवेति ।

पृ० ४४. १७७. ग्रन्थकार: साश्चर्यमाह--मायात्याग इति । प्रयत्नान्माया-
त्याग:, भक्त्या श्रीशलाभ इति वाक् अलमत्यन्तं केवला
रिक्तार्था इति सम्बन्ध: । कुत: ?--व्यत्यस्तार्थ इति ।
१८१. वसुदेव: यमुनामाह—हे यमुने ! त्वमिति । तातभर्तृपद-
वासिनम्—तातस्य सूर्यस्य भर्तु: सिन्धोश्च पदे स्वरूपे
वासशीलम् ।
१८२. ग्रन्थकार: 'नैतदाश्चर्यमि'त्याह--यत्क्लेशलेशेति ।
कलनात् स्वीकारात् ।

पृ० ४५. १८४. ग्रन्थकारो नेदमाश्चर्यमित्याह--निर्द्वेति । ग्रन्थकार: गोकुला-
ऽऽगमनस्याऽऽशयमाह—केचिदिति ॥ ३ ॥

## चतुर्थोऽध्याय:

पृ० ४७. १. भगवतीभगवतोरैक्यं दर्शयति ग्रन्थकार:—स्वशक्तिमिति । सा स्वशक्त्या अखिलद्वारविधानयोगम् ईशशक्त्या च तद्द्वास्थनिद्रापगमं च चक्रे, तद् युक्तमिति सम्बन्ध: ।

३. कार्पण्यदर्शनादिप्रयत्नं कुतश्चकार ?—स्वापत्यादिति ।

४. साश्चर्यमाह ग्रन्थकार:—पश्यन्त्या अपीति । देवक्या हृदये ममत्वं युक्तम्, किं पुनराश्चर्यम् ? अज्ञाततत्त्वस्थितेरपि कंसस्य चेतसि ममत्वमाविरभूदिति तु चित्रमिति सम्बन्ध: ।

५. 'किं बोधयन्ती कंसहस्ते गता' इति ग्रन्थकारप्रश्न:—जहातीति । तद्धस्तात् देवकीहस्तात् । तस्य कंसस्य ।

६. पदयोर्ग्रहणे रजस्तमोरूपपदद्वयाश्रयवत्त्वं कारणमाह—निर्विघ्नमिति ।

७. पृष्ठपदात् सूचितमर्थमाह—यदियमिति ।

८. मायाऽऽह—प्रक्षाल्यमानाम्बरवदिति । प्रक्षाल्यमानं यदम्बरं तद्वत् । अम्बराङ्गा अम्बरवत् वस्त्रवत् अङ्गं यस्या: सा इति न, किन्तु अम्बरे आकाशे अङ्गं मूर्तिर्यस्या: साहमस्मीति ।

पृ० ४४. १०. तस्या: स्वरूपग्रहणेन सूचितमर्थमाह—स्वरूपाप्ताविति ।

१२. किमित्येवं बभाषे देवी ?—नोक्तमिति । यत् यदि । अच्युतजन्मजातम् इत्यनन्तरमितीति शेष: । तत् तर्हि ।

१४. कृष्णं साश्चर्यमाह ग्रन्थकार:—शत्रुत्वमिति ।

१५. हास्योक्तौ नीतिमाह—यदीति । समन्तुषु सापराधेषु ।

पृ० ४९. १९. शुकेन किं बोधितम् ?—यो ह्यत्रेति । नष्टभावं नाशभावम् । स्वत: स्वयम् । ऋषिणा प्रदिष्टम्—'आरादागतमृत्यव' इत्यादिना ।

२०. शुक: शपति—सर्वांशत इति । सशापवाचा शापसहितया वाचा ।

२१. कुर्वन्त्विति । यद्गोकुले येषाम् इन्द्रियसमूहे हरिरास्ते तेषाम् स्पष्टोऽन्योऽर्थ: ॥ ४ ॥

## पञ्चमोऽध्यायः

पृ० ५०. २. तरणिसाहित्येऽपि मज्जनमाश्चर्यकारीत्याह—यदङ्घ्र्यब्ज-मिति । उदधितरणिः उदधिनौका तमस्तोमध्वंसी तरणिः सूर्यः । इह जगति । त्वयि गृहे सतीति सम्बन्धः । वितरणित्वं दातृत्वं तरणिशून्यत्वञ्चोपेत्येति सम्बन्धः ।

४. श्रीकृष्णमाक्षिपति—यस्येति । स्यादसावर्थहीनः—'येषाऽह-मनुगृह्णामि तद्धिशो विधुनोम्यहम्' इति कथनमिति सम्बन्धः । वितथकथनं व्यर्थनिरूपणम् ।

पृ० ५१. ८. 'भयमानन्दनाशकमि'त्याह—पूर्णानन्देति । कंसभयावहे कंसात् भयम् आवहति धारयति तस्मिन् ।

११. तद्वसतिस्थाने स्वयं वसुदेवगमने कारणम्—यस्मिन्निति । तत् तर्हि ।

१२. यद्वा—धीरान्तर इति । यत् यतः ।

पृ० ५२. १४. शीघ्रं गोकुलप्रेषणे हेतुः—सत्कर्मस्विति । असौ अन्तरायो-दयः ( विघ्नोदयः ) ॥ ५ ॥

## षष्ठोऽध्यायः

पृ० ५३. २. पूतनाऽऽगमनतन्नाशनाभ्यां सूचितमर्थमाह—जातश्चेदिति ।

३. पूतनाऽऽगमने कारणमाह—लोकत्रयेति । गुणोत्करः गुणराशिः । सः कंसः ।

४. पूतनागमनेऽपि तत्र भयशङ्कैव नास्तीत्याह—रक्षोघ्नतेति ।

पृ० ५४. ७. सुन्दररूपधारणे कारणम्—हेमाङ्गन इति । गोकुलस्य इन्द्रियकुलस्य । स्पष्टोऽन्योऽर्थः । सुवर्णवराङ्गनायाः सुवर्ण-युक्तानि अङ्गानि यस्याः सा, सा चासौ वराङ्गना च तस्या रूपमुरीचकार स्वीचकारेति सम्बन्धः ।

९. श्रीदृष्टान्तस्य योग्यत्वमाह—अनङ्गेति ।

१०. ग्रन्थकारः—सा त्विति । तद् रूपम् ।

१२. किमिति गोपीभिर्न निषेधिता ? तत्राह—विधिमेवेति ।

१३. आश्चर्येणाऽऽह—नेति नेतीति ।

१४. अग्निदृष्टान्ते कारणम्—प्रतापिन इति । प्रभावतः प्रभा विद्यते यस्य तस्य । सार्वविभक्तिकस्तसिः इति वा ।

१५. अक्षिमीलने कारणम्—सुप्तानुकारिणीति ।

पृ० ५५. १८. यद्वा—ह्यस्तनेऽपीति ।

१९. यद्वा—ऐहिकमिति ।

२३. यद्वा—या स्त्रीति । आधात् अकरोत् ।

पृ० ५६. २४. यद्वा—दृष्टा चेदिति ।

पृ० ५७. ३३. निःशङ्कं विषपाने कारणम्—तार्क्ष्येति । विषाशनः शिवः ।

३६. निष्पीड्य पाने कारणम्—विपाकर्ष इति ।

३९. यद्वा—जलनिधीति । अतिशयितम् आधिक्यम् । स्वामृतम् सुधां स्वमुखस्थां मोक्षञ्च ।

४१. शुकोक्तेरर्थमाह ग्रन्थकारः—प्राणैरिति ।

पृ० ५८. ४४. पूतनावधचरितेन किं सूचितम् ?—दुर्वर्त्मग इति ।

पृ० ५९. ५०. नैतदाश्चर्यमित्याह—यः साक्षादिति । अभिमर्शितः स्पृष्टः ।

५२. स्वाभिप्रायमाह ग्रन्थकारः—प्रागिति ।

५३. पूतनाचरित्रेण किं सूचितम् ?—आलोच्येति ॥ ६ ॥

## सप्तमोऽध्यायः

पृ० ६०. १. राज्ञः आशयमाह—सर्वमिति ।

३. निद्राया आगमने हेतुः—श्रीनायकेति ।

६. स्तनजपानेच्छायां कारणम्—अनिवेद्येति ।

८. चरणयोरूर्ध्वचालने कारणम्—युष्मदिति । अङ्घ्री प्रतीति भावः ।

पृ० ६१. १०. पादेनाऽऽघाते कारणम्—किमर्थमिति ।

१३. नीतिं सूचयति—स्वीकृत्येति ।

पृ० ६२. १८. बालवचनेऽश्रद्धायां हेतुः—अबलाऽलङ्कृतस्येति ।

१९. गुरुत्वे कारणम्—यात्येवेति । तदाश्रितस्य मात्राश्रितस्य । सा गुरुता ।

२०. यद्वा—वाय्वस्त्रेति । धरेशैः नृपैः ।

२२. भूमौ स्थापने कारणम्—अहमिवेति । असौ यशोदा ।

२३. यद्वा कृष्णः—नीत इति ।

२५. स्त्रीस्वभावमाह—अपत्यावनत इति ।

पृ० ६३. २६. शकटभङ्गानन्तरं तृणावर्तागमने कारणम्—वन्योऽप्यहमिति। यदधिरोहणतः यस्मिन् शकटे अधिरोहणतः। अनसः शकटस्य।
२७. गोकुलपीडायां कारणम्—मन्नाम्नेति। तत् गोकुलं प्रतिदिनं मद्वैरिणं कृष्णं सेवत इति सम्बन्धः।
२८. नीतिं दर्शयति—आघात इति। एवं चेदिसम्बन्धः।
२९. तदेतद्युक्तमित्याह—यदेति।
३१. तृणावर्तनाशेन किमसूसुचत्? कृष्णः प्राह—हिंस्र इति।

पृ० ६४. ३२. शिलायां पतने कारणम्—शिलेति।
३५. कृष्णेऽष्टसिद्धीः प्रदर्शयति ग्रन्थकारः—कुर्वन्निति। अणुम् अणिम्नान्वितं तृणम्। गरिमाऽपि सिद्धिविशेषः। लघुता लघिमानम्। ईशः ईशित्ववान्। हृद्वगी हृदये वशित्ववान्। 'प्राप्तो घोषजनैरि'ति प्राप्तिनाम्नी सिद्धिः सूचिता।

पृ० ६५. ४०. विश्वरूपदर्शने कारणम्—स्तन्यादिति।
४१. यद्वा यशोदा प्राह—स्तन्यमिति।
४४. यद्वा विराड्रूपदर्शने कारणम्—वाल्येति।
४५. नेत्रनिमीलने कारणम्—दिव्यानामपीति॥ ७॥

## अष्टमोऽध्यायः

पृ० ६६. ६. आत्मनामेति। 'आत्मनाम गुरोर्नाम नामाऽतिकृपणस्य च। आयुष्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः॥ गृह्णीयाच्चेद् गुप्तमेवे'ति तथाऽवदत्।
७. स्वरूपकथने कारणम्—न नामेति।

पृ० ६७. १०. यद्वा—अनाम्न इति। अधिगम्यं ज्ञेयम्।
१३. का माया?—सत्य इति। यत् यतः।
१५ भूमौ रिङ्गणेन किं सूचितवान्? कृष्णः प्राह—यत्पीडितेति।

पृ० ६८. १६. जानुकररिङ्गणं किमभिप्रायम्? इत्याह कृष्णः—आदाविति।
२०. तथा रिङ्गणे कारणम्, कृष्णः प्राह—चेल्लोकमिति।
२४. कृष्णः प्राह—निवेशितोऽहमिति। सुरसास्वादः प्रेमरस स्वादः।

पृ० ६९. २७. कृष्णः प्राह--या मामिति। याः बुद्धयः। पुच्छगतम् 'ब्रह्मपुच्छं प्रतिष्ठेति' श्रुतेः ।

२९. गोपीनां विस्मयेन हासे किं कारणम् ?--अचलमिति। श्रुतिविस्मयः गोपीनां विस्मयः ।

३०. कृष्णः प्राह--श्रृङ्गिध्वंस इति । अहेः अघस्य । तदनुगतदृढाचारहेतोः तदनुसारिदृढाभ्यासार्थम् ।

पृ० ७०. ३२. पद्भ्यां गमने कारणम्-- प्रेम्णेति ।

३७. गोपीप्रतारणेन सूचितमाह, ज्ञानिभिः संसारे कथं वर्तितव्यम् ? --वृत्तीरिति । वृत्तीः इन्द्रियवर्तनानि । विषयान्तरवर्तमानाः ईश्वरातिरिक्तविषये वर्तमानाः ।

पृ० ७१. ३९. शिशुभ्यो दाने कारणम्--असाक्षित्वेति ।

४०. यद्वा--केवलाद इति । केवलादी 'केवलाघो भवति केवलादी' इति श्रुतेः ।

४१. यद्वा मर्केभ्यो दाने कारणम्--वन्यैरेवेति । वनवासिनोऽपि रामावतारे इति यावत् । प्लवगोपकारनिकरान् वानराणामुपकारसमूहान् ।

४३. ग्रन्थकारः सहवासं नमन् 'सहवासोऽनादरकृत्' इत्याह--आसीदिति ।

४६. ग्रन्थकारः गोप्युक्तानन्तरं मृद्भक्षणलीलायां कारणमाह--तत्तादृगिति । साङ्गं कर्म विनेशप्रेम, केवलात् कर्मणो न भगवत्प्राप्तिः इत्याशयः। रजःस्वरूपफलकं वैषयिकसुखजनकमित्यर्थः ।

पृ०.७२. ४७. कथने कारणम्, गोपाः प्राहुः--अस्मानिति । एतावत् एतावत्कालपर्यन्तम् ।

४८. अज्ञत्वात् बाला अकथयन्, रामः कथमकथयत् इति चेत्, तत्र रामाशयं दर्शयति--दुर्मारेति ।

पृ० ७३. ५६. मृद्भक्षणे कारणम्--विश्रृङ्खलेति ।

पृ० ७४. ६३. यद्वा समदृष्टीन् शिक्षयति--समदृष्टेरिति ।

६४. करग्रहणे कारणम्--मृद्भुक्तीति ।

६५. भयसम्भ्रान्तप्रेक्षणाक्षत्वे कारणम्--भुक्त्वाऽपीति

पृ० ७४. ७२. विश्वदर्शने कारणं प्रदर्शयति कृष्णः—मामेवेति ।

७६. यद्वा ब्राह्मणमहत्त्वं दर्शयति—यावत्य इति । ब्राह्मणात्मनि स्वास्ये—'ब्राह्मणोऽस्य मुखमासीत्' इति हि पुरुषसूक्तम् ।

पृ० ७६. ७९. यन्नेति । संसारगुरुकानने संसारगुरुकस्य संसारगुरोः आनने, स्वार्थे कः । पक्षे स्पष्टोऽर्थः ।

८१. पुनर्विश्वरूपदर्शने कारणं प्रदर्शयति ग्रन्थकारः—यावदिति ।

८२. आत्ममतौ कारणम्—सर्वदर्शनेति । आत्ममतिः आत्मनि भगवति मतिर्यस्याः सा ।

८४. मोहे कारणमाह कृष्णः—किञ्चिदिति ।

पृ० ७७. ८५. यशोदाया धन्यतामाह—पितामहोऽपीति ।

८७. साश्चर्यमाह—न पितराविति ।

९२. व्रजवासिनां भाग्यमभिनन्दति – यं चिन्वन्तीति । यज्जातो वेदनिवहः 'यस्य निश्वसितं वेदाः' इति वचनात् । पुत्रात्मना पुत्रादिरूपेण । यत्र व्रजे ॥ ८ ॥

## नवमोऽध्यायः

पृ० ७८. ३. स्वयं मथने कारणम्—श्रीशस्येति ।

पृ० ७९. ८ स्तन्येच्छायां कारणमाह कृष्णः—पूर्णकाम इति । हार्दरसः प्रेमरसः ।

९. भगवद्भजनाविरुद्धे कर्मणि त्यक्तेऽपि न भातिरिति सूचयति कृष्णः—मर्येति ।

१०. यद्वा निषेधे कारणम्—कृत्वेति । हीनगुणावृतम् हीनगुणाभ्यां निकृष्टगुणाभ्यां रजस्तमोभ्यामावृतम्, ते रजस्तमसी बहिःकृत्वेति भावः ।

१३. संसारिणां स्वभावमाह—निरर्थकेति ।

१४. अल्पादरो महत् तिरस्करोतीति लौकिकमाह—महतोऽपीति ।

१५. पयसः अग्नौ याने कारणं युग्मेनाह—यन्नामेति ।

पृ० ८०. १६. न चेदेवम्—अन्यथेति ।

१७. यद्वा पयसोऽधोयाने कारणम्—उन्मार्गेति ।

यद्वा—स्तन्यपरं वीक्ष्य हरिं चुल्लिस्थपयोऽग्निमाविशद्युक्तम् ।
समजातीयोत्कर्षः प्रायः सर्वस्य दुःसहो भवति ॥
( श्लोकोऽयमधिकः ) ।

पृ० ८०. २१. भाण्डध्वंसे कारणम्—वदन्तीति ।

पृ० ८१. २४. युग्मेन कामादित्रिकफलं चरितात् सूचयन् त्याजयति—कामीति । गीतावत्—
'कामः क्रोधश्च लोभश्च तस्मादेतत् त्रयं त्यजेत् ।' इति ।

२६. नवनीतग्रहणात् सूचितमाह—विपुलेष्विति ।

२७. हासे कारणम्—निरर्थकमिति । दैवगतिमिति—
"पीयूषेण सुराः श्रिया मुररिपुर्मर्यादया मेदिनी
शक्रः कल्परुहा शशाङ्कलया श्रीशङ्करस्तोषितः ।
मैनाकादिनगा निजोदरगृहे यत्नेन संरक्षिता-
स्तच्चूलीकरणे घटोद्भवमुनिः केनापि नो वारितः ॥"

३०. साधुः खलसङ्गान्न भ्रश्यति इत्याह ग्रन्थकारः—न हीयत इति ।
'हस्त इव भूतिमलिनो यथा यथा लङ्घयति खलः ।
सुजनं दर्पणमिव तं कुरुते तथा निर्मलच्छायम् ॥' इति ।
'साधुपापविशुद्ध्यर्थं दुर्जनः परिकल्पितः ।
ग्रामवीथीविशुद्धयर्थं सूकरः परिकल्पितः ॥' इति ।
'भग्नकुम्भशकलेन वै मल बालकस्य जननी व्यपोहति ।
तद्वदोष्ठयुगलेन दुर्जनो मातृतः शतगुणाधिकायते ॥' इति ।
'सत्सङ्गाद् भवति हि साधुता खलानाम्' । इति च ।
अतः खलसङ्गतो वदान्यस्य सच्छीलं न हीयत इति भावः ।

पृ० ८२. ३२. भक्ताय किं किं न ददामि ?—यद्यपीति ।

३३. यष्टिग्रहणे कारणम्—अकृत्यमपीति ।

३५. पलायने कारणम्—तमोगुणांशोऽपीति । सः तमोगुणः ।

३७. रोदने कारणम्—आलभ्येति । रुदितं हि बलं शिशूनाम् 'बालानां रोदनं बलम्' इत्यभियुक्तोक्तेः ।

३९. नेत्रमर्दने करणम्—कर्मणामिति ।

पृ० ८३. ४२. यष्टित्यागे कारणम्—तावदिति ।

४३. कृष्णः प्राह—मदीयमिति । सुलभोऽपि भवामि ।

४६. अस्मिन् दामबन्धनं सुकरमित्याह—गर्भोक्तेति । नामदाम तस्य वाक्सन्ततिः, 'नामानि दामानीति' श्रुतेः ।

४८. उलूखलबन्धने कारणमाह कृष्णः—अयमिति । एतत् उलूखलम् ।

पृ० ८४. ५१. अपूरणे कारणम्--यथा यथेति ।

५२. कैमुतिक-न्यायेन बन्धनाऽनागमे कारणमाह—रजःप्रभृतय इति । यम् 'अप्रमेय-त्रयातीत-निर्मलज्ञानमूर्तिम्' । लघुगुणैः अल्परज्जुभिः ।

५३. द्वितीयं कारणम्--यदिति ।

पृ० ८५. ५४. द्वयङ्गुलोने कारणम्--यदेति । द्वयोः रजस्तमसोः सम्बन्धो न स्फुरति ।

६०. द्वितीयं कारणम्--इमाविति ।

पृ० ८६. ६९. कृष्णो बन्धनागमने कारणमाह--मत्प्रेमेति । अस्य भक्त-देहस्य । अहं सहेय बन्धनमिति सम्बन्धः ।

पृ० ८७. ७१. द्वितीयं कारणम्--गोकुलस्थैरिति । गोकुलवासिभिः । तद्गतेन गोकुलगतेन ।

७३. उदरनिमित्तः खलसम्बन्धो बन्धनाय भवतीत्याह—खलेति । 'स्तोकेनोन्नतिमायाति' इति 'खलः सत्क्रिय' इति पद्यद्वयं द्रष्टव्यम् ।

७७. यशोदामभिनन्दति--येषामिति । येषां दशरथादीनाम् । द्वितीयचरणे–येषां सनकादिनाम् ।

पृ० ८८. ८१. कृष्णः प्राह--मुक्तं मामिति । अदभ्रो बहुलः । अर्हत्वं योग्यत्वम् । क्षमं योग्यम् ।

८६. कृतार्थीकरणे कारणम्—अर्जुनेति ।

८७. कृष्णं स्तौति--अहो इति ॥ ९ ॥

## दशमोऽध्यायः

पृ० ८९. २. नीतिमाह ग्रन्थकारः—यत्कृत्यमिति ।

५. नारदस्य क्रोधे तयोः शापान्मुक्तौ च कारणम्—यद्वेति । अस्य नारदस्य । तादृक्फलः शापफलः ।

पृ० ९०. ६. प्रतिकूलु इति । प्रतिकूले विधौ नारदयोगे । अनुकूले वा विधौ कृष्णयोगे ।

९. वस्त्राऽपरिधाने कारणम्—यत्कार्यमिति । तत् तस्मात् कारणात् ।

पृ० ९०. १०. विवस्त्र-गुह्यकपदाभ्यां किं ध्वनितम् ?—लोक इति । विवस्त्र-
गुह्यकपदाभ्यामिदं ध्वनितं यत् लोके गुह्येन्द्रियं वस्त्रेण
निगूह्यमेव । कश्चित् स्फुटीकरिष्यति चेन्महादोषः, तत्काल-
फलदः ।

११. श्रीमदे सर्वेषामन्तर्भावः—कामेति । काममोहानृतेषु मध्ये ।

१२. तमेव सयुक्तिकमाह—राजन्निति । गिरिजानाथेनेति । तदुक्तम्—
'एको रागिषु राजते प्रियतमादेहार्धहारी हरो
नीरागेषु जनो विमुक्तललनासङ्गो न यस्मात् परः ।
दुर्वारस्मरवाण-पन्नगविष-व्याविद्धमुग्धो जनः
शेषः कामविडम्बितान्न विषयान् भोक्तुं न मोक्तुं क्षमः ।।'
तत्याग एव । यद्वा, रावण-बाणादिभ्यो दानम् ।

पृ० ९१. १४. श्रीमदात् के के नष्टाः—पापधैरिति । इमौ नलकूवर-मणिग्रीवौ ।
गहनं वनम् । पङ्क्तिमुखो रावणः । धृत्वोपदेशक्रमम्—
'उपदेशमसङ्गेन' इति ।

१६. यत्रेति । अत उपदिष्टं ब्रह्मणा नारदं प्रति—
'नाहं देहस्य नो देही मम नायमहं तथा ।
इति विश्रान्तचित्ता ये ते मुने ! पुरुषोत्तमाः ।।' इति ।

पृ० ९२. २०. अञ्जनस्य दारिद्र्यसादृश्यमाह—असुदृष्टिरिति । यद्युक्ते
अञ्जनयुक्ते दारिद्र्ययुक्ते च ।

२२. दारिद्र्यादेव कामादिनाश इति दारिद्र्यं स्तौति—लोभ
इति । यद्योगतः दारिद्र्ययोगतः ।

पृ० ९३. २५. युक्तैवेति । मुकुन्दो विष्णुः निधिविशेषश्च—
'महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।
मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव ।।' इत्यमरः ।

२७. नारद आह—निरावरणमिति । तयोः स्थाणुत्वे मुनिवचसो
युक्तिमाह—उपास्येति ।

पृ० ९४. ३४. नारदस्य नारायणाश्रमगमने लौकिकानुसारि कारणमाह—
आलक्ष्येति ।

३५. आश्चर्येण वासनाप्राबल्यमाह—प्राग्वासनेति ।

३८. मध्ये आगमने कारणमाह कृष्णः—यदाहमिति ।

४०. उपकारः कर्तव्य इत्याह—विहित इति । तर्हि विनियोज्य
इति सम्बन्धः ।

पृ० ९५. ४६. उलूखलद्वारोद्धारणे कारणं नीतिमाह ग्रन्थकारः—स्वानुगेति ।

पृ० ९६. ५१. अङ्घ्रिबन्धोत्पाटने कारणमाह ग्रन्थकारः—अत इति ।
अङ्घ्रिः चरणः ।

५५ कैः किं कार्यमित्याह ग्रन्थकारः—दण्डवदिति । तरुतज्जकृतौ तरुभ्यां पतनम्, ताभ्यां नलकूबर-मणिग्रीवाभ्यां नमःपूर्वकं स्तवनमिति विवेकः ।

५९. कथमेतद् विरुद्धम् ? तत्राऽऽह—सत्सङ्गादिति । सत्सङ्गात् नारदसङ्गात् । खलाङ्घ्रेः उलूखलाङ्घ्रेः ।

पृ० ९८. ६७. अनुग्रहं समर्थयति नलकूबरः—यदामयेति । एष नारदकृतः ।

७२. ननु किमपि प्रार्थनीयम्, तत्राह—यत्तात इति ।

पृ० ९९. ७७. कृष्णाशयमाह ग्रन्थकारः—मयीति । विभवायैव = ऐश्वर्यायैव । यद्वा मोक्षायैव ।। १० ।।

## एकादशोऽध्यायः

पृ० १०१. ३. कुतस्तेषां भ्रम इति समाधत्ते ग्रन्थकारः—यदागमस्थमिति ।

५. युक्तियुक्तं बालादपि ग्राह्यम्—मधुरमिति ।

८. प्रहासे कारणम्—मातेति ।

पृ० १०२. ११. अन्यैरमोचने कारणम्—मात्रेति ।

१५. भक्तपराधीनतां दर्शयति कृष्णः—सौख्यमिति ।

१६. यद्वा, जीवन्मुक्तानां स्थितिं सूचयति कृष्णः—आधायेति ।

पृ० १०३. १७. अनागमने कारणम्—मामिति ।

२०. न रोहिणीति । तद्धितप्रत्ययः कंसाय व्यक्तो मा भूदिति सम्बन्धः ।

२१. रामानागमने कारणम्—यदीति ।

२२. यद्भग्नेति । अत्र पूर्वार्धे । ग्रन्थकारस्य उत्तरार्धे च कृष्णस्य वचनम् ।

पृ० १०४. २७. ग्रन्थकारः 'इन्द्रियाणां सङ्गात् हानिरि'ति सूचयति—गोकुलेति ।

३१. किमबोधयत् कृष्णः इति समाधत्ते ग्रन्थकारः—उत्पाद्येति ।

पृ० १०५. ३२. यत्रैकमत्यमिति । एकस्मिन् कृष्णे मतिर्यस्य सः एकमतिः, तस्य भाव ऐकमत्यम् ।

३६. प्रीतौ कारणम्—यदभीष्टमिति । गोवर्धनसक्तमतेः गावः पृथ्व्याः गवां धेनूनां वा वर्धने सक्ता मतिर्यस्य तस्य ।

३७. वत्सपालने कारणम्—गवावनेति ।

पृ० १०६. ४१. यमुनायां वत्सचारणेन सूचितमर्थमाह—सूर्यात्मभूतीति । अस्मिन् गोजातवृत्ति सदसत्-स्फुटनिर्णये सूर्यात्मभूति-सविधिस्थितिरेव हेतुः भवति इत्यन्वयः ।

पृ० १०६. ४२. तृणनाशनानन्तरं वत्सासुरागमने कारणम्—यस्येति ।

४६. पादग्रहणे कारणम्—यथेति ।

४७. यद्वा, पादद्वयग्रहणे कारणम्—कंस इति ।

पृ० १०७. ४९. तदिच्छापूरणं कृतवानित्याह—असुरहितेति ।

पृ० १०८. ५५. कृष्णः किमबोधयत् ?—मत्पाल्यमानेति ।

५६. पुष्पवृष्टौ कारणम्—दैत्यध्वंसमिति । उक्तं च—
'आनन्दाश्रूणि नेत्राब्जात् कराब्जात् कुसुमानि च ।
मुखाब्जाज्जयशब्दं द्राक् त्रिदशास्ते समत्यजन् ।।'
( वा० कृ० चं० ) इति ।

५८. दूराद् दर्शने कारणम्—अतिशुद्धेति ।

५९. यद्वा, अपरीक्ष्य सङ्गो न कार्य इत्याह—शुद्धाकृतिमिति ।

६१. वत्सानन्तरं बकागमने कारणम्—वत्सासुरेति । 'न हि न वकः' बको न स्यामिति न, किन्तु न बको वत्सो न स्या-मिति भावः ।

६४. मुखप्रवेशे कारणम्—बहिरिति ।

पृ० १०९. ६६. को भ्रम इति जिज्ञासा—वियोगादिति । कथं शुभं स्यात् इति सम्बन्धः ।

६७. कथं कृष्ण उष्ण इति समाधत्ते ग्रन्थकारः—श्रीकृष्णस्येति । तत् तस्मात् कृष्णवर्त्माश्रितः ।

६८. बहिर्याने कारणम्—वृन्दावन इति । नवकानने नेति च्छेदः, नूतनवने च ।

पृ० ११०. ७३. भगवद्भजनं कथं कार्यम् ?—कृष्णनामेति ।

७४. विदारणे कारणम्, दाम्भिकं नाशयामीत्याह—सद्द्वेषमिति ।

७७ साश्चर्यमाह ग्रन्थकारः—विज्ञायापीति । यत् यस्मात् ।

७८. भववेदनाऽज्ञाने कारणमाह ग्रन्थकारः—तादृगिति । श्रुतिमात्रवेद्यम् वेदैकगम्यं श्रवणमात्रेण ज्ञेयं वा । अध्यक्षं प्रत्यक्षम् ॥ ११ ॥

## द्वादशोऽध्यायः

पृ० ११२. ११. बालानां स्वभावं वर्णयति ग्रन्थकारः—अन्योन्येति ।

१२. भगवत्सेवया कृतार्थत्वं सूचयति ग्रन्थकारः—जानन्तोऽपीति। सज्जीविताः सफलजन्मानः सेवन्ते अत इत्यन्वयः ।

पृ० ११३. जीवन्मुक्तैः न कथं संसारे वर्तितव्यम् ?—( साकं भेकैरिति: १०.१२.१० ) ।

१७. वानरानुप्लवने कारणम्—परे त्विति । परे बालाः ।

१८. प्रतिबिम्बदर्शनजहासे कारणम्—न हीति ।

२१. अहो गोपानां भाग्यं किं वर्णनीयमिति ग्रन्थकृतो वचनम्—निर्द्वन्द्व इति । विधिः विधिरपीत्यर्थः ।

पृ० ११४. ३०. तद्दर्शनासहने कारणम्—साध्विति ।

पृ० ११५. ३२. संसारे पापं ग्रसत्येवेत्याह ग्रन्थकारः—प्रपञ्चेति ।

३४. प्राप्तभीतिः सर्वेषामस्त्येवेत्याह—न पापेति ।

३६. योग्यमेव तदागमनमित्याह—आर्यमिति ।

३९. गर्वात्तस्य गमनमित्याह—यन्मूलेति । यन्मूलभूतपुरुषाक्रमसिद्धशक्तेः यस्य अघस्य यममूलभूताः मुख्याः ये पुरुषाः ब्राह्मणास्तेषु अक्रमेण सिद्धा शक्तिर्यस्य तस्य । बाहुजाताः क्षत्रियाः ।

४४. तस्य मौर्ख्यमाह ग्रन्थकारः—तत्प्राणेति ।

४५. अजगररूपधारणे कारणमाह ( बहुविषेणायं हन्तुं शक्य इति )—मदग्रेति । उभौ बकीवकौ । यत् यतः । पुरा ग्रसनात् पूर्वम् । विकसितास्यः फुल्लमुखः ।

४६. ससारे मतिमता विषयासक्तेन न भाव्यम्, किन्तु श्रीकृष्णभजनयुक्तेन भाव्यमिति ग्रन्थकृत् भगवत्सख्यं विदधाति—यो य इति ।

पृ० ११५. ४७. संसार एव सर्पमुखसदृशत्वं भगवतो दयालुत्वं चाह—विक्रीडदिति ।

४९. नाश्चर्यं तँविज्ञायीति ग्रन्थकृत् आह—नादर्शीति । अभ्युपेतम् आगतम् । अलं समर्थः ।

पृ० ११७. ५०. हासे कारणम्—अघ इति ।

५२. हस्तताले कारणम्—यदेति ।

५३. निःशङ्कं प्रवेशे कारणम्—दुरन्तादिति ।

५४. न चेद् भगवान् रक्षकः स्यात् तदा स्वसाहसेन सर्वे नश्येरन्—अहो इति ।

५५. संसारिणामियमेव रीतिः यत्संसारे रमणीयत्वादिभावना—येति । अतज्ञकल्पितम् अनात्मज्ञैः कल्पितम् ।

५६. विस्मये कारणम्—किशोरेति । अशेषदर्शनः अशेषः बलदेवरहितः ।

५८. बलरामाऽसाहित्ये कारणम्—भगवन्निति ।

पृ० ११८. ६१. भगवद्वात्सल्यमाह—यन्नामेति ।

६२. धावने कारणम्—सर्वत्रेति ।

६४. अघमुखप्रवेशेन सूचितं कृष्णेन यत् मत्तोऽप्यधिकं मद्भक्ता आदरणीया इत्याह ग्रन्थकारः—लोक इति । मां ध्यायतः पुरुषस्य ।

६६. हाहाशब्दे कारणम्—यत्सङ्गीत्यै इति । अघस्य मोहनिर्वीर्यत्व-वशीकरणार्थं गायनार्थं गन्धर्वाह्वानम् ।

पृ० ११९. ६८. उभयेषां किञ्चिद् भिन्नां परं त्वेकरूपां वाचमाह—भगवत इति । 'भगवतः' इत्याद्युक्तिः अघबान्धवानाम्, 'भगवते'-त्युक्तिस्तु देवानाम् ।

७०, वृद्धौ कारणम्—यदंशत इति । यदंशतः बृहद्गरत्वाभिमानांशतः ।

७३. तत्प्राणनिर्गमे प्रभुनिर्गमे च कारणम्—किमस्माभिरिति । अस्मद्गोधनं किमकरोत् ? इति सम्बन्धः । 'अद्य युष्माकं स्थितिः एवम् अस्माभिः त्यक्ता चेत् इति तत्प्राणैः उक्तः सः कृष्णः निर्ययौ' इत्यन्वयः ।

पृ० १२०. ७६. वृन्दावनविहारीति नामसार्थक्यमाह—अन्वर्थयन्निति । युगपत् एकदैव ।

पृ० १२०. ७७. मुकुन्दनामसार्थक्यमाह—अन्वर्थकानीति ।

८०. नैतच्चित्रमित्याह ग्रन्थकारः—ध्वान्ताराविति । ध्वान्तारौ सूर्ये । अखिलाधारे—

'साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ।
हरन्त्यघं तेऽङ्गसङ्गात् तेष्वास्ते ह्यघभिद्धरिः ॥'

इति गङ्गां प्रति भगीरथवचनम् । 'तथा अखिलाधारेः हरेः भक्तानां हृदि उदयात्' इत्यन्वयः ।

८१. अद्भुतत्वं योग्यम्—प्रभुणेति । सुरेशविस्मयभूः इन्द्राद्याश्चर्यजनकः ।

८२. भक्तरक्षको दुष्टमोक्षदश्चायमिति अघासुरोक्तिः—दुष्टानामिति ।

८३. अघासुरस्य श्यामसुन्दरे लये कारणम्—बक इति । ज्योतिरात्मा ज्योतिरूपः । जघन्यं निन्द्यम् ।

पृ० १२१. ८४. यद्वा अघासुरः प्राह—प्रभाविति । अस्मात् विचारात् । सः अघः ।

८५. नाश्चर्यमित्याह ग्रन्थकारः—कथमपीति ।

८६. क्षणमपि योगिदुरवापां योगिभिः दुरवापाम् ।

८८. पितामहाश्चर्ये नाश्चर्यम्—सानन्दमिति ।

९१. जीवन्मुक्तानां शिष्टोऽपि भवो न बन्धायेत्याह—सम्पाद्येति । यः अच्युतपदाध्यक्षा भवेत्, स जीवन्मुक्तिमुपागतः । अस्मिन् भवे ॥ १२ ॥

## त्रयोदशोऽध्यायः

पृ० १२६. २९. क्षुद्वचसः कारणमाह कृष्णः—नित्यतृप्त इति ।

३१. भोजनं कथं कार्यम्, कथञ्च न कार्यमित्याह ग्रन्थकारः—ध्यात्वेति । अस्मिन् संसारे । अन्यस्त्वघ एव केवलभुक्—'केवलादो भवति केवलादी' इति श्रुतेः ।

पृ० १२७. ३२. अवैदिकानि भोग्यानि न भुञ्जीतेति ग्रन्थकारः प्राह—यं कञ्चिदिति । अध्वनि ध्वनितं बोधितमिति भावः ।

३४. यज्ञभुग् भूत्वाऽपि बालकेलित्वे कारणमाह कृष्णः—हविर्भागादपीति । स्वल्पमपि अन्नं प्रीत्यै, भवतीति शेषः ।

पृ० १२७. ३५. वत्समार्गणेन किं सूचयति कृष्णः ?—ये मद्भक्तीति। अक्षाणि इन्द्रियाणि। अमतः अमेण। संशोधयामि पवित्रीकरोमि। तद्भीतिं वत्सनाशजभीतिम् निवारयन् दूरीकुर्वन्।

३६. कृष्णः प्राह—यस्येति। भक्ताधिकबलः, अपीति शेषः। तद्वशः भक्तपराधीनः।

३७. वत्सार्थं याने कारणमाह कृष्णः—अस्मदिति। अमृतं दुग्धम्। तदवनालसधीः तदवने वत्सरक्षणे अलसा धीर्यस्य।

पृ० १२८. ३९. यद्वा कृष्णः प्राह—भक्त्याशयेनेति। यैः गोपैः। गोरक्षादीक्षितः वत्सनाशात् गोनाशप्रसङ्गः।

४०. यद्वा, मार्गणेन किं सूचितम् ?—मयीति। परोक्षपदे तिरोहिते। अन्यथा प्रत्यक्षे।

४२. यद्वा ग्रन्थकारः प्राह—धीर इति। गावः इन्द्रियाणि धेनवश्च। विषयेषु देशेषु शब्दादिषु च। विशदयन् प्रकटयन्।

४३. यद्वा गमने कारणमाह कृष्णः—आस्वाद्येति। गोजाताऽऽकलिताल्पमुग्धविषयाः इन्द्रियैः सम्पादिताः अल्पाः तुच्छाश्च विषयाः यैस्ते।

४४. यद्वा 'मित्राण्याशान्माविरमतेहानेष्ये वत्सकानहमि'त्युक्त्या सूचितं भक्तदुःखमसह्यमित्याह—योग्यत्वमिति।

४५. सकवलगमने कारणम्—विषयासक्तेति। तृणासक्तगोवशीकरणार्थं शब्दादिविषयासक्तेन्द्रियवशीकरणार्थं चेति।

पृ० १२९. ४८. विधिलिखिलमार्जनात् क्रुद्धो वत्साहरणं चकारेत्याह—दुष्टोऽयमिति। ततः निरयात्। तद्वितथीकृतां तेन व्यर्थीकृताम्।

४९. यद्वा ब्रह्मा किमिति वत्सानहरत् इत्याह—स्वयेति।

५०. यद्वा बालान् प्रष्टुं तानहरत् इत्यभिप्रायेणाह—येनेति। तच्चिन्तितं तेन कृष्णचिन्तनं किमु कृतमिति भावः।

५१. यद्वा भगवदभिप्रायमजानन् जहारेत्याह—मन्मुख्येति। गोजातं शब्दब्रह्म।

पृ० १२९. ५२. ब्रह्माणं न न्यषेधयदित्यत्र कारणमाह कृष्णः—विधिरिति।

पृ० १३०. ५६. 'विविक्तमि'त्युक्तौ कारणमाह— यः पाटच्चरेति ।

५८. पुत्रादिरूपभवने गोपानां पुण्यमेव कारणमित्याह कृष्णः— अत्रत्यानामिति । अत्रत्यानां गोपानाम् । अक्षुण्णं पूर्णम् । 'अतो भाव्यं पुत्रात्मने'ति अन्वयः ।

६०. गोपवत्सानुरूपधारणे कारणम्— लक्ष्मीकान्त इति ।

६१. तत्तदाकारे कारणम्— अनेत्र इति । अनेत्रो हस्तपादादिः । अपवित्रो गुदादिः । गात्रेण हीनो यष्ट्यादिः । मुख्यार्थः स्पष्टः ।

पृ० १३१. ६४. परमार्थं बोधयति ग्रन्थकारः—आत्मैक इति । लोकदृशां ज्ञानिनां दृष्ट्या । अभिमतवृत्तितया योग्यवर्तनत्वेन ।

६५. आत्मनि पुत्रभावं द्रढयितुं स्तन्यं तासु ससर्ज कृष्णः— एतदिति । तदा हृतवत्सापेक्षयाऽल्पबालसत्त्ववाले ।

६६. गोगोपीनां भाग्यं वर्णयति—योऽत्रेति । यः सद्रसः ( यतः ) रसमयः । सुरसालमान्यः रसविशेषभावनाचतुराणां मान्यः । तं कृष्णम् । याः गो-गोप्यः । तत्साधुभाग्यगरिमा तासां सुन्दरभाग्यमहत्त्वं भुवने हि प्रसिद्धमेव किं बहुवर्णितेनेति ।

पृ० १३२. ७०. रामसाहित्येकारणम्—विना योगमिति । योगं चित्तवृत्ति-निरोधं विना महतामपि ब्रह्मविषयकं यदज्ञानं तस्य निराकृतिर्न । यद्वा विना योगं रामसंयोगं विना, शिशु-वत्सानामपि ब्रह्मविषयकाज्ञाननिवृत्तिर्नैव । यद्वा—शिशु-वत्सानां गोपबाल-गोवत्सानां ब्रह्मकृतं यदज्ञानं मायया स्वरूपस्फुरणं तस्यापि निवृत्तिः विना योगम् उपायं न भवित्री इति तदर्थं रामयुक् । 'वत्सा उपायाभिज्ञा' इति तु प्रसिद्धम् ।

७१. यत्रेति । गोजातवृत्तयः गोवत्सवर्तनानि, इन्द्रियवृत्तयश्च । तद्गवां तेषां धेनूनाम् इन्द्रियाणाञ्च ।

७२. आत्मनः प्रेमास्पदत्वम्—निःसीमेति । आत्मा श्रीकृष्णः । अपरं प्रियम् । उक्तञ्च—'आत्मार्थत्वेन हि प्रेयान् विषयो न स्वतः प्रिय' इति । 'न वा अरे कामाय जाया प्रिया भवति' इति च ।

७३. 'मामेव ये प्रपद्यन्ते' इति सिद्धान्तमाह—मायेति ।

पृ० १३३. ७६-७७. जीवानां भ्रमसंशयनिश्चयानन्तरमेव अद्वैतबुद्धिरिति ब्रह्मचरितात् सूचितमर्थमाह युग्मेन ग्रन्थकारः—इमे वेम इति। किम् इमे अथवा किम् अहमिति संशयः। अजोपास्यान् ब्रह्मोपास्यान्। मतिः निश्चयात्मिका। आकलितं निर्धारितम्।

७९. 'अनन्याश्चिन्तयन्तो मामि'ति सिद्धान्तमाह कृष्णः—कार्यान्तरेति।

८०. स्वरूपाज्ञानेनैव संसरति जन इत्याह ग्रन्थकारः—स्वाविषयैवेति।

८१. स्वकीयमल्पज्ञत्वमविज्ञाय महतः पुंसः परीक्षार्थं यतन् अपमानपात्रं भवतीत्याह—अविज्ञायेति। अलघुगर्वेण महतो गर्वेण। अत्र प्रमाणं धातैवेति सम्बन्धः।

८२. प्रायश्चित्तं चरति ब्रह्मा दण्डप्रणामरूपम्—आद्रापराधमिति।

पृ० १३४. ८६. चतुर्मुकुटकोटिस्पर्शे कारणम्—चतुर्भिरिति।

८७. गर्वरहितेन भाव्यमित्याह ग्रन्थकारः—गर्वस्थितेरपि ॥१३॥

## चतुर्दशोऽध्यायः

पृ० १३६. १०-११. ज्ञाने केन हेतुना प्रयासः कार्यं इति युग्मेन ब्रह्माऽऽह—येषामिति।

पृ० १३७. १३. ब्रह्माज्ञानात् भक्तेराधिक्यमाह—श्रीमदिति। श्रीमद्भक्तिसुबोधयोः, मध्ये इति शेषः। स्वोत्कृष्टत्वविवादकाग्रहजुषोः स्वस्य उत्कृष्टत्वे विशिष्टवादकर्तृणाम् आग्रहं जुषतः भजतः प्राप्नुतः तौ तथा तयोः भक्तिबोधयोरिति सम्बन्धः। सुमनसो भक्ताः। अन्त्ये बोधे। प्राक् ( एव ) आसम्, प्रकृते इदानीं तु।

१६. श्रोतव्यमिति। अन्तः हृदये। ततः अपरोक्षमिति सम्बन्धः। तान् अदृष्टभगवद्रूपान्। लोचनचरं प्रत्यक्षम्।

१७. सम्पूर्णगुणवर्णन दुष्करमित्याह—अब्धेरिति। ( कुम्भसम्भवे ) अब्धेः पानं ( शेषे ) अखिला इला पृथ्वी, ( विश्वामित्रादौ ) अन्यत्रिलोकीजनिः, ( ध्रुवादौ ) वायुस्तम्भनम्।

१८. स्वीयमज्ञानवृद्धत्वं वदति—ज्येष्ठ इति। ज्येष्ठो वृद्धः।

पृ० १३८. १९. तत्र लौकिमाभाणकं प्रमाणयति––अतिवृद्धेति।

२०. साश्चर्यमाह––अदृष्टपूर्व इति। अदृष्टपूर्वः अदृष्टं पूर्वं प्रवर्तकं यस्मिन् भ्रमे, न दृष्टपूर्वः इति च। यत्प्रभावतः भ्रमप्रभावतः।

२२. क्षमापयति–अत्यल्पमिति। तर्हि स्पष्टं करोतीति सम्बन्धः। मर्षणं सहनम्। इति हेतोः।

२३. किं वा मोहं कृपां वा प्रापित इति न जाने इत्याह–– दुर्वासस्थितिरिति।

२४. नैतदाश्चर्यमित्याह––अनार्येति।

२५. क्षमापयति––अनन्तकोटीति।

२६. मम माता पिता च त्वमेवासि इति क्षमापयति–– वितस्तिमितकेति।

पृ० १३९. २७. हेताविति। त्वद्वीक्षणापूर्णदृक् त्वद्दर्शने अपूर्णा दृक् यस्य सः। त्वद्दर्शने पूर्णदृष्टिर्नास्मीति न मे दोषः, कारणस्यैव अपूर्णत्वात्।

२९. लौकिकन्यायमनुवदन् क्षमापयति––जात इति। तावक-सुतः तवायं पुत्रः। तदर्थान्वयी तमर्थमन्वेतीति सः, पूर्वार्धे निर्दिष्टार्थानुगामीत्यर्थः।

३१. अदृष्टपूर्वं ते रूपमित्याह––मात्स्यमिति। काएठीरवं नृहरिम्। ब्राह्मे कल्पे जातौ वा। अन्यानि रूपाणि।

पृ० १४०. ३२. महान् प्रसादः कृत इत्याह––इयानेवेति। पुरा भूतकाले, अग्रे भविष्यकाले, अद्य वर्तमानकाले।

३३-३४. आत्मानं धिक्करोति युग्मेन––भूमारेति। येनावैक्षीति। येन हेतुना। अर्वाक् अग्रे इतः कालात्।

३५. गोकुलं धन्यमित्याह––धन्यमिति। यैः गोपबालैः।

३६-३७. गोपीनां भाग्यं वर्णयति द्वाभ्याम्––तासामिति।

पृ० १४१. ३९. तमश्छेदकमिति। यथा इति शेषः। एवं तथा। येन भाग्येन।

४१. प्रार्थयति––अत्रत्येष्विति। उर्वीरुहां वृक्षाणां मध्ये येन जन्मना।

४२. पादप्राप्तिप्रार्थने कारणम्––त्वन्नाभिपद्मादिति। अत्र रेणौ।

पृ० १४२. ४७. उपकारं स्मरन् चरणभजन याचते--कृतेति। दुरुन्नेयं दुर्मोचनीयम्। ईहे इच्छामि। अन्यत् सुखम्।

४८. अब्रुवन् कमर्थं सूचितवान् कृष्ण इत्याह--वत्सानिति। अहं ब्रह्मा।

४९. यद्वा अभाषणे कारणम्--यन्मायेति। अपहरता दूरीकुर्वता।

५१. अनिवेद्य भोजी कृतघ्न इति वाला आहुः—गोजातानीति।

पृ० १४३. ५२. हासे कारणमाह कृष्णः—अहो इति। मुन्युक्तानुभवात्, मुन्युक्तञ्च 'हासो जनोन्मादकरी च माये'ति।

५३. कृष्णः किमसूचत् इत्याह ग्रन्थकारः—मद्दत्तेति।

५५. आत्मालङ्करणे कारणम्—मोचयित्वेति।

५८. अद्येत्युक्तौ कारणम्—अन्तराल इति।

५९. शुकः प्राह—आत्मप्रीत्यै इति। ते तव राज्ञः।

६०. एवं क्रीडायां हेतुः प्रह्लादोक्तिः—कौमार इति।

पृ०. १४४. ६२. 'कौमार आचरेत् प्राज्ञो धर्मान् भागवतान् शुभान्।'

--इति प्रह्लादोक्तिः।

'कर्मणा कर्मनिर्हारो बोधितः' इत्याह ग्रन्थकारः

—कौमारैरपीति ॥ १४ ॥

## पञ्चदशोऽध्यायः

पृ० १४५. ३. गोपालने कारणम्—मत्पालनमिति।

पृ० १४६. ६. 'पुण्यमतीवे'त्यत्र युक्तिमाह ग्रन्थकारः—वृन्दावनमिति।

११. बलं प्रति भाषणे कारणम्—नित्यानन्तेति। तान् वृक्षान्।

१२. यद्वा, कृष्णः प्राह—सर्वाग्रचस्येति। तत्कृता वृक्षकृता। इति वक्ष्यमाणम्।

पृ० १४७. १६. कृष्णोक्तिरियम्—प्रत्येकमिति। 'पूर्वेक्षितान् पूर्वंदृष्टान् पुना रिक्तपाणिर्न पश्येदि'ति सम्बन्धः। त्रित्वावलीढः त्रित्वेन गुरु-देवता-नरपतित्वेन अवलीढः आस्वादितः। पल्लवा एव कराः। 'रिक्तपाणिर्न पश्येत राजानं देवतां गुरुम्' इति स्मृतेः।

१८. कृष्णः प्राह--लघूनिति। ततः किम्? 'सुविष्णुपदगामिता तदुचिता' इति सम्बन्धः।

पृ० १४८. १९. किं सूचितं भ्रमरेषु मुनिपदव्यपदेशेन––नाम्नेति । मुनिराट्
स एव, कः ? यस्वति । अच्युतम् अस्खलितं सन्ततं वा ।

२१. मुनिसादृश्यं द्रढयति कृष्णः––सदागमेति । सुमनोरस-
सेविनः पुष्परससेविनः, सुमनसि रस 'रसो वै सः' इत्युक्तं
सेवितुं शीलं येषां ते इति वा । श्रुत्यानन्दगिरः श्रुत्या
यशसा वेदेन च आनन्दयुक्ता आनन्दकरी वा गीः 'माहा-
त्म्यमस्यः प्रवेदयते मह' इत्यादिरूपा येषां मुनीनां ते
श्रुत्यानन्दगिरः । यद्वा, श्रुत्या श्रवणमात्रेण आनन्दकर्यः
गिरः येषां ते, अलिनः मुनयः कथं न इत्यन्वयः ।

२२. मयूरनृत्ये कारणम्––मद्बर्हमार इति ।

२४. कोकिलशब्दात् किं सूचितम् ?––यस्येति ।

२६. भूमेः कोऽभिप्रायः ?––मत्पालक इति । मदनुवर्तनं मत्-
कर्तृकां सेवाम्, ईक्षमाणः पश्यन् ।

पृ० १४९. २७. गोपिकाधन्योक्तौ कारणमाह कृष्णः––अध्यास इति ।

२८. सत्यमाह––न वृक्षैरिति । किन्तु तव कृपावत्सलत्वमिति
सम्बन्धः । तथात्वेन प्रणामादिरूपेण ।

२९. अपि च, कथं ब्रह्मा तर्वादिषु जन्मार्थितवान् इति शङ्का-
निवारणाय वृक्षादिस्तुतिरित्याह––अनादृत्येति । यत् यतः ।
तेषां वृक्षादीनाम् । तत्पदगतिः सन् तत्स्थाने गतिर्यस्य ।

३१. पक्षिशब्दाश्रयणेन किं सूचितमित्याह–मच्चेष्टयेति । विचेष्टते,
उक्तञ्च—'योऽयं कालस्तस्य ते व्यक्तबन्धो
चेष्टामाहुश्चेष्टते येन विश्वम्' इति ।

३२. रामाङ्घ्रि-सेवनेन किं सूचितम् ?—तत्त्वज्ञेनेति ।

३३. प्रार्थयति ग्रन्थकारः—ग्राम्योऽपीति । मां भक्तम् ।

पृ० १५०. ३४. तालफल-प्रार्थनेन किं सूचितम् ?—तारोल्लसदिति ।
तारोल्लसद्रसफलानुभवः 'ओमित्येकाक्षरं ब्रह्म' इति
श्रुत्या तारः प्रणवब्रह्म, तस्मिन् उल्लसद् रसरूपं फलं
श्रीमद्भागवतम्, 'श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः
सज्जनि' इत्यादौ सुरतरुत्वेन, 'निगमकल्पतरोरि' त्यादिना
रसरूपफलत्वेन च निरूपितत्वात्, तस्य अनुभवः श्रीकृष्ण-
त्वेन भानं भक्तियोगं विना न प्रभवितेत्यर्थः । अथवा
ताराः रलयोः सावर्ण्यात् तालाख्यवृक्षाः, तेषां फलानुभवो
नेति सम्बन्धः ।

पृ० १५०. ३५. आनन्दप्रतिबन्धकक्रोध इति सूचितमर्थमाह ग्रन्थकारः—
प्रपञ्चेति । सरसात्मनः सरसरूपस्य ।

३६. किं सूचयन् धेनुकासुरवधमैच्छत् गोपबालक इति गोपवरा आहुः—वत्सानिति । कान्तं प्रियम् ।

३८. कृष्णस्य हर्षे कारणम्—आकृत्येति । 'अनुपेक्षमेव' इत्यत्र 'अनुपेक्ष्य एव' इति वा पाठः । 'असौ आकृत्यापि खलः, खलगणोपेतश्च, प्रकृत्याऽपि च खल' इति सम्बन्धः ।

पृ० १५१. ४३. 'खलसङ्गः फलभ्रंशकरः' इति तालफलपातनात् सूचितमर्थमाह—शीतोष्णादीति ।

४४. प्रत्यग्रदृभ्यां ताडनेन किं सूचितं खरेण इत्याह ग्रन्थकारः—अपूर्वाभ्यामिति ।

४५. परावस्थितत्वेन सूचितमर्थमाह ग्रन्थकारः—खला इति ।

४६. एकवारं प्रहारसहनेन बलः किमसूचयत् ?—शत्रोरपीति ।

४८. शैघ्र्येण किमसूचयत् बल इत्याह—शपथेनेति ।
'अत्र किञ्चिन्न वक्तव्यं शापितोऽसि ममोपरि ।'
इति अध्यात्मरामायणे उक्तम् । पुरा रामावतारे । अनेन रामरूपेण कृष्णेन । अरं शीघ्रम् ।

४९. युक्त्याऽऽह ग्रन्थकारः—दृष्ट्वेति । प्रसभरुद्धसुतालमालम् प्रसभं बलात्कारेण रुद्धाः सुतालानां मालाः पङ्क्तयः समूहा इति यावत् । येन तम् केतौ ध्वजे । जयपदे जयसूचकस्थाने ।

पृ० १५२. ५३. बलः तृणराजाग्रे कुतश्चिक्षेप इत्याह—आक्रम्येति । मे बलस्य । अनुजेन कृष्णेन । असुरः वत्सासुरः ।

पृ० १५३. ५६. तालकम्पनेन धेनुकाङ्घ्रिधारणेन च किं सूचितमित्याह—सम्पीडितोऽपीति । 'फलदानशीलः' इत्यनन्तरं भवतीति शेषः । समुद्धृतसंपदोऽपि गृहीतपादोऽपि । तालादिकम्पनम्, कृतेऽपि तालकम्पने फलाप्तिरिति भावः ।

५९. आनन्देन व्रजाऽऽगमने कारणम्—अहमस्मीति । सः कृष्णः ।

६०. गोपीकर्तृक-सत्कृतौ कारणम्—दुरध्वेति । दर्शिताद्यव्रतम् दर्शितम् आद्यव्रतं दुरध्वखलनाशनं येन ।

पृ० १५४. ६७. बलराहित्ये कारणम्—राम इति । अस्य कालियस्य ।
'गोपिकानन्ददायी'ति टिप्पणीसम्मतः पाठः ।

पृ० १५५. ७१-७२. किं सूचितवान् कृष्णः ? इति युग्मेनाह ग्रन्थकारः—

जानन्तोऽपीति । तद्भुजः तत् विषं भुञ्जते ते तद्भुजः । तदेव द्रढयति—एतद् द्वयमिति । जनमोह—स्वभक्तत्राण-रूपं द्वयम् । गोपजाताः गोपबालाः ।

७४. यद्वा मातृवाक्यं सत्यं विधातुं गोपालोज्जीवनम्—यस्त्व-भक्त इति । एतत् "मर्त्यो मृत्युव्याले'त्यादि मातृवाक्यं प्रमाणं विधास्यन्" इत्यन्वयः ।

पृ० १५६. ७७. चरिते किं सूचयामास ? तदाह युग्मेन—गोविन्देति । तत् तर्हि ॥ १५ ॥

## षोडशोऽध्यायः

पृ० १५७. १. यमुनायाः शुद्धीकरणे कृष्णाभिप्रायमाह—श्रीकृष्ण इति ।

अत्र दृष्टान्तः—इन्द्रेणेति । मुनियुवतिम् अहल्याम् । तच्छुद्धिकामः तस्याः यमुनायाः शुद्धिकामः । जनदृगघहरम् जनानां दृक्षु यद् अघं यमुनाविषयकं कालियसम्बन्धजन्यम्, तत् हरति तत् यथा भवति तथा ।

४. यमुनाया निर्विषत्व-करणे कारणम्—कृत्वेति ।

पृ० १५८. ८. यद्वा—योऽस्मिन्निति । तदीयाभिधम्, तदीया प्रह्लाद-सम्बन्धिनी अभिधा यस्य तम् । भुवनं जलम् ।

९. कृष्णाशयमाह ग्रन्थकारः—य इति ।

११. खगपतनार्थकेन शुद्धवचसा सूचितमर्थमाह—विषया-हिरिति । अवनिजान् भूमिजान् । ऊर्ध्वगतीनपि देवादीनपि ।

पृ० १५९. १४. कदम्बारोहणेन किं सूचयति कृष्णः—सदम्बेष्विति ।

'सदम्बेषु सिद्धमनुग्रहम्' इति योज्यम् । कदम्बाऽविलम्बा-ऽवलम्बात् कदम्बस्य अविलम्बेन अवलम्बस्तस्मात् स्फुटार्थम् अघात् इत्यन्वयः ।

१६. आगमावलम्बे आशयः—आगममिति । आगमं वेदं वृक्षं च ।

१८. स एव कथमवशिष्टः ? इति समाधत्ते ग्रन्थकारः—नित्या-गम् इति । यतः यस्मिन् । अयं कृष्णः । अपायिनः नाशवन्तः ।

पृ० १६०. २०. बाह्वास्फोटने कारणम्--खलनिग्रहेति ।

२१. यद्वा, भुजं बोधयति कृष्णः--स्वामेवेति । अतन्द्रितेन सावधानेन ।

२२. गाढरशनत्वे कारणमाह कृष्णः--विधातुमिति ।

पृ० १६१. ३३. ह्रदाशयं व्यञ्जयन् उच्छ्वसिताम्बुत्वे कारणमाह ग्रन्थकारः--धन्वन्तरीति । तन्मिषेण उच्छ्वसिताम्बुमिषेण ।

३६. कृष्णोक्त्या ह्रदविहारे कारणमाह ग्रन्थकारः--साक्षीति । भवाम्भोनिधौ विहरामि, किमर्थम् ? स्वभक्तावनं दुष्टविमर्दनं च तरसा शीघ्रं कर्तुमिति सम्बन्धः ।

पृ० १६२. ३७. असहने कारणम्--प्रणासीदिति । इत्युक्त्वा अतिकष्टा आगमत्' इति वाक्ययोजना ।

३९. 'पश्यन्नपि नापश्यदित्यत्र नाश्चर्यमि'त्याह ग्रन्थकारः--श्रीवत्सेति । मङ्क्षु सद्यः ।

४१. किं सूचितं नागभोगागमनेन ?--आदाविति ।

४३. गोपालानामार्तत्वे कारणम्--यो निःसीममिति ।

पृ० १६३. ४५. निर्णये कारणम्--अनिष्टेति ।

४६. रामस्य तूष्णीमवस्थाने हासे च कारणम्--विनैवेति । व्यक्तिः स्पष्टीकरणम् ।

४८. हासे कारणान्तरम्--प्रतिक्षणमिति । कृष्णो निधनं गत इत्यतज्ञवत् ।

४९. गोपादीनां वृत्तात् किं सूचितम् ?--भगवदिति । गोकुलवृत्ततः गोकुलस्थ-गोपवर्तनतः ।

५१. निषेधे कारणम्--जडजातेति । यत् जडजातविचित्रचेष्टितं, तत् ईशस्य परम् उत्कृष्टम्, परन्तु तत् निरीक्ष्य न कार्यमित्यन्वयः । यत् यतः । असौ कृष्णः हलिना बलेन ।

पृ० १६४. ५२. बन्धादुत्तिष्ठता किं सूचितम् ?--सन्त्यक्तेति ।

५५. कृष्णप्रभावात् किं सूचितम् ?--स्वरूपेति । यातवीर्याः गतवीर्याः । अभिव्यक्तं स्पष्टम् । आधात् अकरोत् ।

५८. नृत्ये कारणम्--लास इति ।

पृ० १६५. ६०. यद्वा कारणानन्तरं शिवादभेदं दर्शयन्नाह ग्रन्थकारः—नागेति।

६२. यद्वा किमबोधयत् कृष्णः ?—यो युष्मानिति ।

६३. मूर्ध्नि नर्तनेन सूचितमर्थमाह—संसार इति । ब्रह्माण्ड-खण्डात् ब्रह्माण्डनाशात्। भयपुषः भीतिवर्धकस्य। कृतान्तस्य मृत्योर्मूर्ध्नि ध्रुवादिवत् पदं दत्त्वा इति सम्बन्धः। उक्तञ्च—

'मृत्योर्मूर्ध्नि पदं दत्त्वा ह्यारुरोह हरेः पदम् ।' इति ।

प्रत्युत भवतीति शेषः ।

६४. मुमुक्षुणा किं कार्यम् ? इति अङ्घ्रिपातेन शिरोमर्दनेन सूचितम्—या येति । या या वासना स्त्र्यादिकामनारूपा । पदेन स्वरूपेण ।

पृ० १६६. ६७ बालपुरस्कारे कारणम्—बाल इति ।

७०. प्रार्थयन्ति नागपत्न्यः—शिक्षैवेति । प्रथमं शिक्षारूपधर्मम्। उरगाधीशे कालीये । द्वितीयः प्रजारञ्जनरूपः ।

पृ० १६७. ७१. दण्डमप्यनुग्रहं मन्यमाना नागपत्न्य आहुः—त्वद्बुध्येति ।

७२. निग्रहपूर्वोऽनुग्रहः साधुरित्याहुः—अनुग्रहादिति । प्रथमात्, निग्रहात् । परः अनुग्रहः ।

७५. अभयं प्रार्थयन्त्यो नागपत्न्य आहुः—त्वत इति । नागाऽनवरत-दयाशालिहृदयात् नागेषु सन्ततदयया शालने तच्छीलं हृदयं यस्य तस्मात्, त्वत्तः ।

पृ० १६८. ७७. नमने स्तुतौ च कारणम्—दुर्धर्षेति । स्वधिकारहीनाः शोभनाधिकारहीनाः ।

७८. अनुग्रहयोग्योऽयमित्याहुः—कीदृशयोरिति । कुतः ? यतः—शान्तेति ।

८२. अनुग्रहे यशोलाभमाहुः—नामापराधेति । तदबलासु कालियस्य अबलासु । दास्यः आस्म, अतः किं विधेयमित्याज्ञापयेति शेषः ।

पृ० १६९. ८५. प्रार्थयति कालियः—तमःस्वभावान्वयीति । तमःस्वभावान्वयि तमःस्वभावानुसारि । दूषयितुं दोषत्वेन स्थापयितुम् । क्षमं योग्यम् । कुतः ?—यत इति । सर्पे, गुणत्वं रज्जुत्वम् । समुदोत्पादितं सानन्दं यथा तथा उपपादितम् ।

८६. युक्त्याऽऽह कालियः—यदीति ।

पृ० १७०. ९२. सान्त्वयन्नाज्ञापयति कृष्णः—स्वभाव इति। जनुरनुगतः जन्मानुसारी। स्वभावः त्यक्तश्चेत्, तर्हीति सम्बन्धः। भाषतस्तव। कृष्णाजलं यमुनाजलम्।

९३. किं बोधयन् स वरां वाचमूचे ?—इदमिति। तत्संश्रितः अनुशासनाश्रितः। तमेव कालीयमेव।

९५. कृष्णार्पणं विदधता किमसूचि ?—श्रीनायकेति। इदमेव कृष्णार्पणमेव, लक्ष्म लक्षणम्।

९८. अब्धौ प्रेषणेन सूचितमर्थमाह—जात इति।

पृ० १७१. ९९. जडजातमिति। देही देहादिजडमनात्मत्वेन निश्चित्य जीवमात्मत्वेन विशोध्य मरणरहितो भगवद्रूपो भवेदिति वेदान्तरहस्यं 'तत्त्वमसी'त्यादिवाक्यैर्निरूपितम्॥ १६॥

## सप्तदशोऽध्यायः

पृ० १७२. १. भयात् असौष्ठवात् उत्तरवयस्त्वात् वैराग्याद् वा स्वस्थानत्यागः सम्भवति, नाऽत्र किमपि कारणं दृश्यते विना द्वेषमित्याह—स्वीयावासतयेति। सः कालीयः। तत् तस्मात्।

२. विनयत्यागात् स्वस्थानत्यागप्रसङ्ग इत्याह शुकः—विनय इति। ईदृगेव वक्ष्यमाणप्रकारका स्थानच्युतिरूपा।

३. नाऽहिस्मयमिति। अहिरिव घातकः स्मयो गर्वः। वितनोद्भवोऽपि। नम्रपक्षे उत्कृष्टो भवो जन्म यस्य, भगवदाश्रितत्वात्। तादृक् सगर्वम्।

४. सव्यपक्षाघातेन सूचितं सत्स्वभावमाह—शत्रोरिति।

५. पक्षपात इति। सद्व्रतस्य गरुडस्य। सत्यपि जातेऽपि।

६. नीतिभङ्गकारी स्थानं न लभते इत्याह—विशेषवृद्धैरिति। विशेषवृद्धैः ब्रह्मादिभिः। स्मयतः गर्वतः।

पृ० १७३. ८. दयालूनां स्वभावं सूचितमाह—अयमिति।

९. यद्वा अविचार्यकारितां निषेधति—श्रेय इति। तत् तर्हि। परन्तु—सर्वेषामिति। अम्भोजुषां यमुनाजलसेविनाम्, आख्यायिका श्रीमद्भागवते।

१०. न चेदिति। तस्य मुनेः।

१२. तथापि ग्रन्थकारस्तत्कृतं स्तौति, तस्य दयापरत्वात्—अन्योन्यमिति। तदगम्यत्वं गरुडस्य अगम्यत्वम्।

१५. मोहमाह ग्रन्थकारः—अक्षीणकान्तिमिति। गोपतिः नन्दराजः।

पृ० १७४. १८. हासे कारणमाह रामः—यत्कार्यमिति। परन्तु तत्र प्रतारणपरत्वं मद्विना अद्य आगमनरूपं प्रतारणपरत्वम्।

१९. रामः प्राह—पूर्णान्नैवेति। तदाकाङ्क्षिणः अन्नाकाङ्क्षिणः। लघीयः अल्पम्। अन्यथा एवं न चेत्। तथात्वं क्षुत्-तृट्-च्छ्रमपीडितत्वम्।

२०. दावाग्निवर्तृकदाहे कारणमुत्प्रेक्षते—या एता इति। क्ष्वेडं गरलम्। ताः तृणजातीः।

पृ० १७५. २४. यद्वा परतापकृतां स्वभावं सूचयति—यद्रक्षण इति।

२५. प्रार्थने कारणम्—सदेति। आर्थयन्त प्रार्थयन्त।

२७. अग्निपाने कृष्णाभिप्रायमाह—सर्वदाऽहमिति। सर्वदऽहं सर्वतापम्। सत्कथम्, सत्यः कथा यस्मिन् कर्मणि यथा भवति तथा।

पृ० १७६. ३०. मुखतः पाने कारणम्—यस्मादिति। श्रुत्यर्थधीः 'मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत' इति श्रुतिः।

३१. यद्वा, मुखेनाऽग्निशान्त्या किं बोधितम्?—भवानलमिति। न चाऽलं पर्याप्ता नेति सम्बन्धः। ब्राह्मण एक एव, ब्राह्मणोऽस्य मुखमासीदि'ति श्रुतेः।

३२. यद्वा—अतिकालेति। एवं कुतः? न हीति। कस्मात् हेतो।

पृ० १७७. ४४. तर्हि स्वयं राम एव कुतो नापिबत्? तत्र रामविचारं युग्मेनाह—प्रलयानल इति। यत् यदि। सः प्रलयाग्निः।

पृ० १७८. ४५. इत्यालोच्येति। स्वयम्, तूष्णीमिति शेषः। स्थितिक्षणः स्थितौ क्षणः अवसरः यस्य एवम्भूत आसीत्॥ १७॥

## अष्टादशोऽध्यायः

पृ० १७९. २. ग्रीष्मस्य शैत्ये कारणम्—पिबत इति।

३. यद्वा—निसर्गेति। साधुवृन्दावनगुणस्य कृष्णस्य।

४. यद्वा वसन्तं कृष्णं दृष्ट्वा निदाघं सन्तं सन्तो वदन्ति स्मेत्याह ग्रन्थकारः—नितान्तमिति। त्रितापम् अध्यात्मादित्रिविधतापम्।

५. नाश्चर्यमित्याह ग्रन्थकारः—यत्रेति।

७. काकपक्षधारणेन किं सूचितम्?—हंसपक्षेति।

पृ० १८०. ११-१२. प्रलम्बविचारः गोरूपधारणे कारणमिति युग्मेनाऽऽह— अतित्वरेति । अस्याः त्वरायाः । तां त्वराम् । तादृक् गोपरूपी । अवहित्था आकारगुप्तिः । अदुःशकं सुशकम् । सः प्रलम्बः ।

१४. सख्याऽनुमोदने कारणम्—ज्ञाताऽपीति । स्वविरुद्धं व्रतम् ।

१५. द्वितीयं कारणं कृष्णमुखेनाऽऽह—अकुर्वाण इति ।

पृ० १८१. १८. कल्पितक्रीडायां हेतुमाह कृष्णः—अनेनेति । कृतककेलिं कल्पितक्रीडाम् ।

१९. द्वन्द्वीभूय विहारे कारणम्—ममत्वेति ।

२२. निजविभागेन किं विचारितं श्रीकृष्णेन ?—अनेनेति । प्रतिकृतिं 'बदला' इति हिन्दी भाषायाम् । अध्वनि ध्वनितः ।

पृ० १८२. २६. भाण्डीरवटसीमाकरणे कारणम्—विधुतेति । विधुतविहितसीमनि विधुता त्यक्ता विहितस्य विहिता (कृता) वा सीमा मर्यादा येन तस्मिन् । अत्र अस्मिन् प्रलम्बे । यदि दण्डो न व्यरचि तर्हि नीतावधर्मः स्यात् इति सम्बन्धः । तादृक्सुसीमं तादृशी शोभना सीमा यस्य तत् ।

२७. पराजयस्वीकारे कारणमाह कृष्णः—एतदिति ।

पृ० १८३. ३२. असुरचरितात् किं सूचितमित्याह ग्रन्थकारः—सकलाभयद इति ।

३३. प्रलम्बविचारः वपुषो वर्धने कारणम्—वपुरिति ।

३५. त्रासे कारणं प्रकटयति बलरामः—गोप इति । श्रीशस्नेहपदं कृष्णस्नेहाश्रयः । न तद् विदितमिति चेदिति सम्बन्धः । अस्मिन् कृष्णे ।

पृ० १८४. ३६. रामः प्राह—वेलोल्लङ्घनेति । असौ भागवतानां सम्बन्धी तु न ?' इति सम्बन्धः ।

३७. स्मृतेरनुभवपूर्वत्वात् पूर्वं कृष्णोक्तं सस्मार रामः, किं तत् ? इत्याह—एतावदिति । सः प्रलम्बः । ते तव ।

४२. रामात् तद्वधे कारणमाह कृष्णः—अशेषकार्यमिति ।

पृ० १८५. ४५. पुष्पवृष्टौ कारणम्—बलारातित्वमिति ।

४६. ग्रन्थकारः अध्यायमुपसंहरति—सबलमिति । त्वत्रः त्वत्त एव ॥ १८ ॥

## एकोनविंशोऽध्यायः

पृ० १८७. ९. लोभोऽनर्थकृदित्याह ग्रन्थकारः--दुर्मार्गाश्रयण इति। अक्षाणाम् इन्द्रियाणाम्।

१०. लोभादनर्थं दर्शयंस्तत्त्यागं विदधाति ग्रन्थकारः--श्रीशेति। तार्णलोभः, तृणलोभोऽपि भगवद्वियोगं प्रासूत चेत्, किं वाच्यम्? अबला-कनकादिलोभो भगवद्वियोगं करिष्यत्येवेति। गोपतिगवां कृष्णस्यापि गवाम्। कृतिना कृष्णप्राप्तीच्छुना। प्रथमं विधेय इति। उक्तञ्च--'अर्थानर्थेक्षया लोभमि'ति।

११. ननु भवतु भगवद्वियोगः, सुखं तु लभ्यते इति चेन्न, इत्याह ग्रन्थकारः--लोभेनेति। अनुपदं पदे पदे। तादृग्गोवृत्तितः सलोभगोवर्तनात्।

१२. नाश्चर्यमित्याह ग्रन्थकारः--यदिति। यद्बलादेव गवाम् इन्द्रियाणां च बलादेव।

१३. प्रासङ्गिकमाह ग्रन्थकारः--विषयान्वेषणेनैवेति। प्रथमं व्याख्येयोऽयं दृष्टान्तः, अथ दार्ष्टान्तिको मूलतः। यथा तृणरूपविषयान्वेषणेनैव गवामन्वेषणं धीमद्भिर्गोपालैः कृतम्, ततश्च तत्स्थितिं गवां स्थितिम् अलभन्त, तथा विषयान्वेषणेन विषयशोधनेनैव धीमता इन्द्रियशोधनं कृतं चेत् तस्मात् इन्द्रियशोधनात् सः धीमान् तत्स्थितिं कृष्णस्य स्थितिं लभते इति स्फुटम्।

१४. कृष्ण उवाच--गाव इति। उत्तरार्धे मह्यम् उपेन्द्र इति प्रोच्चार्य जनः मदनुगः मद्भक्तः, यथा स्यात् तथा तदभिधानं तासां नामकरणम्, अधात् अकरोदिति सम्बन्धः।

पृ० १८८. १६. पुनरग्निप्रादुर्भावे हेतुद्वयमुत्प्रेक्षते ग्रन्थकारः--कालिन्दीति। ईशमुखामृतैकरसतः पूर्वं तल्लाभात्।

१८. द्वितीयं कारणम् वायुः मुख्यरसास्वादाय अग्निं प्रार्थयामास, तेनाऽग्नेः पुनरागमनम् इत्याह ग्रन्थकारः--जातमिति। तदमृतीकरणात् तस्याः यमुनायाः अमृतीकरणात्। तन्मुखरसोपगमात् तन्मुखरसास्वादात्। एवमुक्त इति यावत्।

२२. गोपा ऊचुः--कृष्णवर्त्मेति। अस्मात् स्थानात्।

पृ० १८९. २३. गोपाः प्राहुः——सकृदपीति। इदानीं तु——त्वयि सतीति। आलीढरूपे विषयरूपे।

२४. पुनरपि गोपानामुक्तिरियम्——इमा इति। तत् गोपालनम्, अस्माभिः कृतमिति सम्बन्धः।

२६. रामस्य तूष्णीमवस्थाने हेतुमाह——प्रवर्तसे इति। स्पशः दासः।

२७. लोचनमीलने प्रथमं कारणम्——एत इति। सभीत्यन्तराः भीतिसहितम् अन्तरं येषां ते। असाध्वसम् अभयम्।

२९. द्वितीयं कारणम्——भवाटवीयमिति। स्वदृग्गृहीतः स्वीयाः स्त्र्यादिविषयाः इति दृष्ट्या गृहीतस्तापः, दृष्ट्या गृहीतो दृष्टिप्रतिबन्धने निवर्तत इति भावः। परन्तु इति शेषः।

पृ० १९०. ३२. तृतीयं कारणम्——विधायैवेति। परोक्षप्रियत्वम्—'परोक्ष-प्रिया इव हि देवाः' इति वचनप्रामाण्यम्।

३७. अग्निपाने कारणम्—स्वकारण इति। इति हेतोः आवि-चारात् बहुविचारात् अलमिति सम्बन्धः। वदनाम्बुजाते मुखस्थे उदके मुखकमले च कृपीटयोनिम् अग्निं लयं निनाय, 'मुखादिन्द्रश्चाग्निश्च' इति श्रुतेः। यद्वा कार्ये कारणलयः।

पृ० १९१. ४१. यद्वा स्वयमेवाग्निः प्राविशदित्याह——भक्तार्पितेति। तद्रूपा-स्वादलिप्सया भक्तार्पित-परप्रेमभक्ति-सुधारसस्य आस्वादं लब्धुमित्यर्थः।

पृ० १९२. ४५. त्रितापहृत्त्वे कारणं किमवोधि ?——विषाग्निरिति। इतीति। सतां त्रितापहृतौ आध्यात्मिकादित्रिविधतापहरणे अवसुप्तोऽस्मि जागृतोऽस्मि इति अवोधि।

५०. प्रासङ्गिकं सतां वृत्तमाह ग्रन्थकारः——सतामिति। उप-कृतिकृत्।

५१. वटसमीपमानयनमाह ग्रन्थकारः——दिग्भ्रान्तीति। आद्य-भूरुहं भाण्डीरवटम्।

पृ० १९३. ५३. यद्वा कृष्णः प्राह—आगन्तुकेति। इति एवंविचारेण। तस्मिन् वटस्थाने। 'कूपोदकं वटच्छाया' इत्यादिशास्त्रिसिद्धम्।

५५. वेणुवादने कारणम्——ज्वलदनलेति।

५७. नाश्चर्यमित्याह ग्रन्थकारः——अतिलङ्घयन्तीति ॥ १९ ॥

## विंशोऽध्यायः

पृ० १९४. ७. प्रावृडागमने कारणम्—दावानलोपशमनमिति। कैतवरुपा मत्कार्यमनेन कुतः कृतमिति रोषसम्भवः।

पृ० १९५. १४. कृष्णं प्रार्थयति ग्रन्थकारः—यावन्मायेति। लब्धिः लाभः। अन्त्ये कलौ युगे। अच्युत त्वं शरणम्—'श्रीकृष्णः शरणं ममे'ति।

पृ० १९६. १६. निन्दति ग्रन्थकारः कालापकम्—किं वेति। वसु जलं धनं च। तज्जीवनाकाङ्क्षिणः तेभ्यः जीवनाकाङ्क्षिणः।

१७ स्तौति ग्रन्थकारः—धन्यमिति।

१८. आद्योदाहरणमिति। 'किं वा तद् वस्त्वि'ति प्रथमश्लोकस्य उदाहरणम्। तव प्रिया भूमिः। आश्रितसुखम् 'सूर्यद्वारेण ते यान्ती'त्युक्तेः।

१९. ग्रन्थकारः प्राह—चलगतीति। मदाय गर्वाय।

२०. क आश्रयार्हः इति समाधत्ते ग्रन्थकारः—अगणितेति। अन्यवसुश्रिया मेघजलश्रिया। तदितरकथनैः तेषाम् इतरेषां कथनैः। तत् तस्मात्।

पृ० १९७. २१. साश्चर्यमाह ग्रन्थकारः—निर्यत्नादिति। वसुनि विषये मया यत्नत अर्जितमिति सम्बन्धः। याते गते सति। प्रतप्तहृदयः, सन्निति शेषः। तत्त्वं साधनं च न वेत्ति। तदुभयोः आगतगतयोः। विधिः भाग्ये हेतुः।

२४. योषितां बलं वर्णयति—क्षमाभृदिति। क्षमाभृदचलान्तरः क्षमाधारकपर्वताः अन्तरे मध्ये यस्य सः, अतः भृशम् असीमत्वाश्रितः। किञ्च—रमापतिपदोल्लसद्धृदयभूः रमापतेः पदेन स्थानेन उल्लसन्ती हृदयभूः आन्तरस्थानं यस्य सः। सदैवाऽमृतः सदैव अमृतं यस्मिन् तथाभूताऽपि अब्धिः जडमयाङ्गनासङ्गमैः चुक्षुभे यदा, तदा परस्य का कथा वाच्या? इति सम्बन्धः।

२५. भक्तेषु कर्मवैफल्यं दर्शयन् कृष्णरतिं विधत्ते—कर्माणीति।

२६. कलौ भक्तिमार्गं गुरूकरोति—अस्त्विति। गहनभवपथोल्लङ्घनाय दुर्गमसंसारमार्गोल्लङ्घनाय।

पृ० १९८. ३०. भक्तसमागमात् कथमानन्दः ?--आदेश इति । यः वैराग्यभाजां सुखदः, स एव आदेशः गार्हस्थभाजां त्रासकृत् इति सम्बन्धः । साध्वागमः आगमनमागमः । यद्वा साधुश्चासौ आगमः भागवतधर्मबोधको मार्गः ।

३१. कृष्णः सकलसुखकरः इत्याह ग्रन्थकारः--वृत्तिमिति । प्राक् आदौ । तापसा इति शेषः । तद्वत् वृक्षवत् । द्विजाग्र्यः द्विजः ब्राह्मणः अग्र्यो यस्य सः ।

पृ० १९९. ३२. कुत्र विधेयो वासः ?--वस्त्विति । वस्वृद्धिप्रसरातिलङ्घितबृहद्वेलम्--वसोः धनस्य कदाचिद् वृद्धिः कदाचित् प्रसरो ह्रासः निर्गमनं, ताभ्यामतिलङ्घिता बृहती वेला मर्यादा येन त विलोक्य दृष्ट्वाऽपि वसानाः ये ते । सालसाः आलस्य सहिताः, यद्वा पक्षिविशेषाः सारसाः । साशाः आशया सहिताश्च । सरःसु अवृद्धिषु अपि । सारसा इति, तत् तस्मात् । गाङ्गं तदेकं पदम्--गङ्गातीरमद्वितीयं स्थानम् ।

३३. कः सेव्यः ? श्रीकृष्ण इति आह--दातेति । तं दातारम् । तन्मार्गात् नीतिमार्गात । अस्मिन् युगे कलौ युगे । दुर्वितर्काः दुष्टो विविधस्तर्को येषां ते विमतमुधाकल्पितैः विमतं वादग्रस्तं मुधा व्यर्थं च कल्पितं येषु तैः दुर्वादैः श्रौतमार्गमिवेत्यन्वयः ।

३४. कः सुखी ?--प्रारब्धत इति ।

३६. धेनूनां सांमुख्यं युक्तमित्याह ग्रन्थकारः--यदेति ।

३७. वृन्दावनस्थाः सर्वे सुखिन आसन्नित्याह ग्रन्थकारः--तदर्थमिति । अस्मिन् वृन्दावने ।

पृ० २००. ४०. भोजनेन किमसूचयद् ग्रन्थकारः ?—तत्त्वज्ञादिति । भक्तं भजक, प्रेमामृतावतं प्रेमैव अमृतं तेन अवतं सिक्तं प्रेमामृतावतं भक्तिभाजां जडं हृदयं तव भूरिप्रीतिदम् । यद्वा—प्रेमरूपेण अमृतेन घृतेन 'अमृतं वा आज्यमि'ति श्रुतेः । अवतं सिक्तं भक्तम् ओदनम्, तथा जडमपि हृदयं हृद् अयते गच्छति तत् हृद्यमित्यर्थः । भूरि प्रीतिदं भवतीति मन्ये, 'पत्रं पुष्पं फलं तोयम्' इत्युक्तेन । स्पष्टं चैतत् कदाचित् गुहायां कदाचित् तरुवरविवरे त्वं वा दध्योदनं यत् भुक्तवानसि ।

पृ० २००. ४१. आश्चर्येणाऽऽह ग्रन्थकारः--युक्तमिति। तथाविधाः अच्युतचिन्तकाः।

४२. कुतः अपूजयत् इत्याह--सूर्यादीति। विद्वदादिद्विजरोधकः, जडप्रचुरः अत्यन्तं पापस्य उद्भवो यस्मिन् प्रायः पङ्किलं पापमयं जीवनं यस्य एतादृशः कलिः, तमिव प्रावृट्श्रियं पूजितामादधे। कुतः ? तदाह--अस्तीति।

पृ० २०१. ४५. प्रावृट्प्रशंसया किमबोधि शुकेन ?--श्रीगोविन्देति। पाला एव न केवलम्, किन्तु सपशवः अतापाश्च तदा जाताः, केवलमेतदेव न--किन्तु इति। कृता करोतीति कृत् तेन प्रशंसा कृता मुनिना।

पृ० २०२. ५२. भगवद्भक्तं प्रति 'अष्टस्त्वम्, जडस्त्वम्' इति कथनमनुचितमिति प्रासङ्गिकमाह ग्रन्थकारः--अष्टोऽपीति। अष्टोऽपि कोऽपि पुरुषः योगकलनात् सत्सङ्गकरणात्। यत् यतः, तत् तस्मात्।

५३. 'भक्तिरेव सर्वस्पृह्ये'त्याह ग्रन्थकारः--सर्वेषामिति। इति हेतोः।

५४. पृच्छति ग्रन्थकारः कृष्णम्--वसुसङ्ग्रहादिति। इति हेतोः वयं न विघ्नः। ज्यायः श्रेष्ठं तव मतं मान्यम्।

५७. कृष्णं शुद्धं तत्त्वमेव वद इति प्रासङ्गिकमाश्चर्यमाह ग्रन्थकारः--प्रतिपदमिति। प्रतिपदम् प्रतिक्षणम्। विषयसुखमहाशाचण्डमार्तण्डजातम् विषयसुखमहाशा एव चण्डमार्तण्डः, तस्मात् जातम्। अन्यतो वर्णयन्तः, अपीति शेषः।

पृ० २०३. ५८. 'भक्तहृदये हरिजागर्ती'त्याह ग्रन्थकारः—प्राप्तेति। सेतुः मर्यादा। स्मयभरः गर्वभारः। वेलाञ्चितः मर्यादायुक्तः। अन्तरे हृदये। स्वर्ण सुवर्ण शोभनोदकं च, 'ऋणशब्दो दुर्गभूमौ जले च' इति कौमुद्याम्।

६०. 'मर्यादाभक्तस्याऽर्थसिद्धिरि'त्याह ग्रन्थकारः—चित्तमिति। भूयात्. तेन किं कार्यम् ? तत्राह—युक्तमिति। सेतुभिः मर्यादाभिः। तस्याऽर्थसिद्धिस्तत्र इति युक्तम्।

६२. स्वाङ्गीकरणं प्रार्थयति ग्रन्थकारः—यथेति। भक्तजनैः, स इति शेषः। ततः किम् ?—-ततः तव मदङ्गीकृतिरपि अलङ्कृतिः अलङ्कारः भवेत्।

पृ० २०६. ७८. शुकोक्ति समर्थयति––प्रभोरिति । या शरद् । ऋषि: शुकः ।

७९. बभूवेति युक्तं प्रार्थयति ग्रन्थकारः––वर्षेति । समानदशा, एवेति शेषः । दीनबन्धोः दृष्टिं प्रसावफलदां कुरु इति प्रार्थये ।। २० ।।

## एकविंशोऽध्यायः

पृ० २०७. १. चतुर्युगाणामावर्तनक्रमो ह्युक्तः, तत्र कृतधर्मं वेणुगीतेनाऽऽह ग्रन्थकारः––वर्णादीति ।

७. 'मत्सान्निध्यादपि हे वेणो ! त्वं कथं जड एवाऽसी'त्याह–– यस्मादिति ।

पृ० २०८. १२. 'भगवत्कराश्रितो महत्त्वं याती'ति साश्चर्यमाह ग्रन्थकारः–– धराश्रित इति । तत् तत्र ।

पृ० २०९. १५. 'भगवद्दर्शनं विना न नेत्रसाफल्यमि'त्याह––यस्मिन्निति । 'यस्मिन् मुखे यत् चक्षुस्तिष्ठति, तत् स्वेष्टदातृ भवती'ति योज्यम् ।

१७. साश्चर्यमाह—न भवेदिति । पुण्यभागः वंशस्य, कुतः इत्याह—सुलभ इति । रसः, अधररसः, एषः कृष्णश्च, परम् अत्यन्तम् ।

१८. पुनः सखेदं साश्चर्यमाह––कस्यापीति । परः कोऽपि अघावलिप्तम् अपहाररूपपापलिप्तम् ।

१९. 'वृन्दावनाद् भूमेः कीर्तिरिति नाश्चर्यमेतदि'त्याह–– भालमिति । 'तथा साक्षा'दिति योज्यम् । आवलिः पङ्क्तिः ।

पृ० २१०. २२. हरिणीनां धन्यत्वमाह––दुःसाध्य इति । तैः कृष्णसारैः श्रुत्युल्लसद्गीतयः श्रुतिषु उल्लसन्त्यः गीतयो यासां ताः । उपमानं दृष्टान्तः । कुतः ? अद्य इति । तद्वीक्षणात् कृष्णवीक्षणात् ।

२३. कैमुत्येनाहुः––देव्योऽपीति ।

२४. के धन्याः ?—त एवेति ।

२५. पक्षिणां मुनित्वं समर्थयन्ति––अनेकेति । लसदात्मसद्गिरः लसन्त्यः आत्मनि मनसि सत्यः गिरः येषां ते ।

२६. नदीनां धन्यत्वमाह––नद्य इति । अवगीतम् अन्यैः अद्यावधि न विशेषेण गीतम् ।

पृ० २१०. २७. साश्चर्यमाहुः—दृष्ट्वेति । आतपत्रं छत्रम् ।
कामातपत्रम्, कामरूपात् आतपत्रात् त्रायते तम् । वयं तु कृष्णघनं प्राप्यापि अनातपयुषो न, किन्तु कामतापतापिता एव स्म इति योज्यम् ।

पृ० २११. २८. 'वृन्दावनस्थतृणभाग्यम् अवर्णनीयमि'त्याह—यल्लग्नेशेति । घुसृणं केशरम् । स्थेम्नः अतिस्थिरस्य ।

३१. को हरिदासः कृतार्थः ?—यः सर्वदेति । अद्रिः गोवर्धनः ।

३२. नैतावदेव चित्रम्, किन्तु अङ्गं सनङ्गं चकार—वेणुस्वनोऽयमिति । अस्पन्दनं स्थैर्यम् । पुलकं रोमहर्षम् ।

पृ० २१२. ३३. 'धन्याः गोप्य इति' ग्रन्थकारः प्राह—स वेणुगीतमिति । अणुगीतम् अलगीतम् । यद् यतः ।

३५. 'कृष्णचिन्तनं कृष्णप्रापकमि'ति ग्रन्थकारः प्राह—अनन्येति । सुघोषयोषितः व्रजयौषितः ।

३६. 'भगवदनुगृहीतो भगवत्प्रापको भवती'त्याह ग्रन्थकारः—त्वमिति ॥ २१ ॥

## द्वाविंशोऽध्यायः

पृ० २१३. १. कृतधर्मं ध्यानमुपदिश्य द्वापरधर्मं परिचर्यारूपं वक्तुं प्रतिजानाति ग्रन्थकारः—नादप्रधानमिति ।

३. 'कुतो हेमन्ते एव व्रतं चक्रुरि'त्याह—स्वानिष्टकृदिति । तत् तस्मात्, विदधुः चक्रुः यत् यतः ।

४. यद्वा—मासानामिति । यद्युगशालिना तत्तद्युगे शालते तच्छीलेन ।

७. 'जगदम्बामेव कुत आनर्चुरि'त्याह—भव्यप्रदा इति । न मातृतुल्यम् 'न मातुः परदैवतम्' इतिवचनात् ।

९. तत्त्वमाह ग्रन्थकारः—देव इति ।

१०. 'परस्परं हस्तग्रहणेन किं सूचितमित्याह—देवीप्रसादादिति ।

१२. किमिति वासोनिक्षेपः ?—नैवेति । तद्वसुविहृतौ इत्यत्र निमित्तसप्तमी ।

पृ० २१७. १७. प्रभोः केन अभिप्रायेण आगमनमित्याह—अहमिति ।

२१. अस्मिन्दिने बलरामराहित्यं तत्र कारणम्—ये यथेति ।

२२. 'तद्वस्त्रेषु कुतो हस्तक्षेपः ? तासां तथैव प्रार्थितत्वादि'त्याह ग्रन्थकारः—भक्तानुरक्तिकेति । कृतार्थय सम्पादय ।

पृ० २१५. २४. यद्वा, कुतोऽम्बरकरः ?—यन्मामिति । मां कृष्णम् । भूतादिकरम् अम्बरोत्पादकम्, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति श्रुतेः । आगमो वेदः । त्वदविश्रम्भी त्वयि अविश्वासी ।

पृ० २१६. २६. यद्वा 'नीतिं दर्शयन् करार्पणं युक्तमि'त्याह ग्रन्थकारः—यद्वस्त्विति । तद्रक्षके गोपीनां रक्षके ।

२७. यद्वा तदावरणानि केन अभिप्रायेण जहार ? सत्यावरण इति । तदनुजिघृक्षुः तासु अनुग्रहीतुमिच्छुः ।

२८. यद्वा तासामिच्छानुरूपं कृतम्—अस्मच्चेतोवास इति । अस्मदिति पञ्चमी च इत इति च्छेदः । कामम् इच्छाम् ।

३२. यद्वा 'यत्करोषी'ति गीतार्थं बोधयन् स्वयमेव कृष्णार्पणं विदधे' इत्याह ग्रन्थकारः—व्रतं वेति ।

३३. बालानां हासे किं कारणम् ? जडजातेति । स्मृतिजातसिद्धसर्वस्मृतिनिरूपितम् । आवरणं मायाशक्तिः । ते गोपाः ।

३४. किं बोधयन् दर्शनं ददौ ?—यावदिति । ताः गोपीः ।

पृ० २१७. ३५. एवमर्थकरणे कारणमाह ग्रन्थकारः—गूढार्थकेति । अनृतं वदसीति चेत्कृष्णः प्राह—अवोचमिति । सा स्मृतिः । इमान् गोपान् । स्मृतिमदन्तराः स्मृतिमद् अन्तरं येषां ते ।

४१. कृष्णस्तात्त्विकमाह—योऽनङ्गेति । त्यक्तरसः 'जितं रसं सर्वं जिते रसे' इति वचनात् । अस्मिन् कलौ अपि । मच्चरित्रे मयि च रसाश्रितः पूज्याश्रितः परमानन्दाश्रितः ।

४२. स्वयमेव सर्वं ब्रुवता किमबोधि ?—तद्व्रतेति । ऐकान्तिकयुवतिभाषणनिषेधः 'एकान्ते युवतिभिर्न सम्भाषणीयमि'ति ।

पृ० २१८. ४३. 'तत्रैवावस्थानेन किं सूचितमि'त्यत्र ग्रन्थकारः प्राह—प्रभुचरित्रमिति । जडगताः जडं मन्दं प्रति गतं प्रचारो यासां ताः श्रुतयः, 'अविद्वद्विषया, वेदाः', 'श्रुतयो यत्र शेरते' इति वचनानां प्रामाण्यात् ।

४६. गोप्यः प्राहुः—यास्त इति । तत् तस्मात्, कुत एवम्, यतः—वाग्वृत्तीति ।

४९. पुनः प्रार्थयन्ति गोप्यः—सरसमिति । स्वभावात् अप्रगल्भधीः, परन्तु स्वभावात् अप्रौढबुद्धिर्यः सः ।

पृ० २१९. ५१. 'यत्कर्तव्यं तदुपदिश, अलं भाषणै'रि'त्याहुर्गोप्यः इत्याह—सदास्येति ।

५४. 'कस्मादपि राज्ञो मम, न भयमस्ती'त्याह कृष्णः—चन्द्र इति । तत्र दृष्टान्तः—क्रुद्धादिति ।

५५. कुत आच्छादनम्?—यज्जगदिति । गोप्य इति शेषः । फलवराशयाः सर्वोत्कृष्टफलरूपे आशयो यासां ताः ।

५८. स्कन्धे वस्त्रधारणेन हस्तोद्घाटने कारणमाह ग्रन्थकारः—यौ वरेति ।

पृ० २२०. ६०. स्मरालयपिधानदूरीकरणेन किमसूचि?—यद्यावृत इति । अनङ्गः मोक्षः कामश्च ।

६१. 'कृष्णोक्त चक्रुरि'ति ग्रन्थकारः प्राह—कृष्णामृतेति ।

पृ० २२१. ७१. ग्रन्थकारः प्राह—मदङ्गेति । मदङ्गसौख्यं स्वरूपसुखम्, मदनङ्गसौख्यं मोक्षसुखम् । 'इति अवधार्ये'ति योज्यम् ।

७३. गोकुलप्रस्थापनेन किमसूचयत् कृष्णः?—मां पश्यतीति ।

पृ० २२२. ७४. 'इमा' इत्युक्तेः सङ्गतिमाह ग्रन्थकारः—व्रतमेतदिति ।

७५. कुत एवम्?—अर्थीति । तद्विधौ तत्सम्पादने ।

७९. किं दुर्लभं प्रसन्ने कृष्णे?—आगमदश्य इति । तासां पुरः कृष्णरूपेणेत्यर्थः ।

पृ० २२३. ८१. दूरयानेन कृष्णेन किं सूचितम्?—भवेयुरिति । युवतिविहितानुग्रहविधिः युवतिषु विहिता अनुग्रहविधिः येन सः । तादृक्तरुवरकृपानुग्रहकृते परमानन्दफलदव्रतेषु कृपया अनुग्रहार्थम् ।

८३. 'वृक्षाणां सल्लक्षणत्वात् तेषां व्याख्यानं भगवता कृतम्, एतद् युक्तमि'त्याह ग्रन्थकारः—यैः स्वैरिति । 'अतस्तेषु वृक्षेषु अच्युतस्य सदागमप्रवचनं 'पश्यतैतान् महाभागान्' इत्यादि व्याख्यानमुचितम्' इति योज्यम् ।

८४. 'एकैकेन दानेन कर्णादयः, कवीनां सद्वाग्भिर्वर्ण्या ये वादास्तेषामाश्रयभूता अभूवन्, तेषां स्तुत्यत्वं किं वाच्यमि'त्याह ग्रन्थकारः—कर्ण इति । पलं स्वमांसम्, ईशः शिवाय इन्दोः कलां प्रादादि'ति योज्यम् । अर्थिने इन्द्राय ।

पृ० २२३. ८६. किं विशदयंस्तरुवर्णनं चक्रे कृष्णः ?——यावदिति । स्वान् भक्तान् । तरुद्विर्वर्णनमिति तदित्थम्——

'अहो अमी देववरा यदार्चितं
पादाम्बुजं ते सुमनः फलार्हणम् ।
नमत्युपादाय शिखाभिरात्मन-
स्तमोपहत्यै तरुजन्म यत्कृतम् ।।'

( भा० १०.१७ )

पृ० २२४. ८८. ग्रन्थकारः प्राह——न तत्रेति । तत्फलं वृक्षाणां फलम् ।

८९. अम्बुपानेन किं बोधितवान् ?——भक्तत्राणेति ।

९०. क्षुधायाः कोऽभिप्रायः ? — स्त्रीणामिति । अयं कृष्णः । इति हेतोः अर्दयति स्म पीडयति स्म याचयति स्म वा ।

९५. 'भगवता अहूतत्वाद् भोज्यमगृहीत्वैव निर्जग्मुरि'त्याह ग्रन्थकारः——यस्मिन्निति । उदीरयन्ति स्म आह्वयन्ति स्म । ते गोपाः । ते कुतो निर्गच्छन्ति ?——तदास्त्विति ।

पृ० २२५. ९८. 'अन्नं विना न क्षुन्निवृत्तिरि'त्याह ग्रन्थकारः——ऋक्षाणीति । 'अन्नम् अन्तरा विना फलादिकं विकलम्, 'क्षुधितस्य यथेतरे', 'कामस्यान्तं च क्षुत्तृड्भ्यामि'ति वचनप्रामाण्यात् ।

१००. उपसंहरति ग्रन्थकारः—गोपीनामिति । अतिथिसमर्हण-प्रशंसाम् अतिथेः समर्हणस्य पूजनस्य प्रशंसाम् । भूयः पुनः । तत् तस्मात् । मे मम ।

'चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ।
दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ।।' इति, 'अयं स्वस्त्ययनः', 'नैवात्मनः', 'नूनं वितुष्टमतयस्तव मायया ये' इत्यादीनि च वचनानि द्रष्टव्यानि ।। २२ ।।

## त्रयोविंशोऽध्यायः

पृ० २२६. १. अस्मिन्नध्याये कलिस्थसन्मार्गं वक्तुं प्रतिज्ञां करोति ग्रन्थकारः—आद्य इति । चरमे कलौ । अभिधाकीर्तनं नामसङ्कीर्तनम् । आद्यतृतीययोः कृत-द्वापरयोः । अत्र अध्याये ।

४. किमित्युभयोः प्रार्थना ?—नैषेति । यत् यतः । अस्मिन् अवसरे । तत्तत्वज्ञः तस्याः तत्त्वं जानातीति सः । यदुपतिः कृष्णः ।

पृ० २२७. ७. गोपनियोजनेन किमबोधि ?—हृद्वासेति। हृद्वासनाशनाय हृदि वासो येषां कामक्रोधादीनां तेषां नाशनाय, हृदि याः वासनाः संसारहेतुभूतास्तासाम् अशनाय भोजनाय नाशायेति वा। हृद्वासनरूपमशनाय भोजनाय 'ओदन-समागमः शक्तः योग्यः' इति वा।

९. यद्वा ज्ञात्वा प्रेषणे कोऽभिप्रायः ?—जानन्नपीति। यत् यतः। ब्रह्मवार्ता वेदवार्ताम्, अस्मिन् कर्मणि।

११. द्वयोर्नामग्रहणे कोऽभिप्रायः ?—योगिन इति। ते विप्राः।

पृ० २२८. १३. कृताञ्जलित्वादिना सूचितमर्थद्वयमाह ग्रन्थकारः—दातेति। विविक्तं स्पष्टं ज्ञातम्, अर्थिस्वरूपमेवमि'त्यपि स्पष्टम्।

१४. 'रामचोदितानि'त्युक्तौ कारणम्—अभ्यर्थनेति।

पृ० २२९. २०. किं कार्यम् ? तत्र गोपाः प्राहुः—प्रणवप्रिय इति।

२१. 'दीक्षाया' इत्युक्त्या किमसूचयन्—वयमपीति। प्रभु-वचनरसज्ञाः वेदतात्पर्याभिज्ञाः यज्ञजाताङ्गिनश्च सर्वयज्ञाना-मङ्गभूताः।

२४. अनेन किं स्पष्टमभूत् ?—सन्तीति। तत्सूक्ष्मतत्त्ववेत्ता तस्य कर्मणः सूक्ष्मतत्त्वं श्रीकृष्णं जानातीति सः कृष्णरूपतत्त्वज्ञः।

२६. हास्ये किं कारणम् ?—यस्मिन्निति। परिचितिः परि-चयः। वस्त्व देशस्य वस्तु ब्रह्म उपदिश्यते यस्मिन् तस्य वेदान्तशास्त्रस्य।

पृ० २३०. ३२. कृष्णाशयमाह ग्रन्थकारः—वेदज्ञा अपीति। मज्ज्ञातिप्रति-बोध्यमानसरणी मां जानन्ति ते मज्ज्ञाः, तैः अतिशयेन बोध्यमाना या सरणिः भगवत्प्रापको भक्तिमार्गस्तस्याम्। विज्ञमुनयः इमे ब्राह्मणा एव। उदाहृतिः उदाहरणम्।

पृ० २३१. ३५. कृष्णः परिहासेनाह—तद्यातेति।

३६. 'स्निग्धा' इत्युक्तौ किं कारणम् ?—यैर्नोत्तरमिति।

३८. 'नमस्करणं योग्यमेवे'त्याह ग्रन्थकारः—स्वतोऽपीति। कृष्ण-प्रणुताः कृष्णेन अत्यन्तं स्तुताः।

३९. दण्डप्रणामेन किमसूचयन् ?—अनादृतेति। विप्राणा-मिति शेषः।

४०. इदानीं कृष्णनामकथने कारणमाह ग्रन्थकारः- हठेनैवेति।

४३. किमपेक्ष्यते ? तत्र गोपाः प्राहुः—पूर्णकामस्येति। भक्तेहा भक्तायाः भक्तस्य ओदनस्य च ईहा इच्छा।

पृ० २३२. ४४. 'भक्त्यैव कृष्णो वशीक्रियते' इत्याह ग्रन्थकारः—यदेवेति।

४५. विप्रपत्नीचरितात् सूचितमर्थमाह—भक्तानामिति। आक्षिप्तस्य निहितस्य। माधवे आवर्तनाय तन्नाम्नः श्रुतिः अलं समर्था इति स्फुटम्।

४६. 'धन्यास्ता' इत्याह ग्रन्थकारः—क्रतुरिति। तत्तृप्त्यै तस्य क्रतुभुजः कृष्णस्य तृप्त्यै।

४८. 'अन्नमादाये'त्यत्र युक्तिमाह ग्रन्थकारः—भक्तप्रिय इति।

पृ० २३३. ५२. अंसहस्तेन कमलभ्रामणेन च किं सूचितवान्?—वराभयेति। निजांसराजत्करः निजांसे गोपस्कन्धे राजन्तौ करौ यस्य सः श्रीकृष्णः।

५३. 'तापं विजह्नुरिति तु योग्यमेवे'त्याह ग्रन्थकारः—मनःस्पृष्टमिति। अखिलसाधारणमपि वस्तु कस्यचित् पुरुषस्य मनसा स्पृष्टं मनोरथगतमपि प्रियं भवति, तदेव चक्षुषा दृष्टं चेत् अतिसौख्याय भवति इति लोके प्रसिद्धम्। उत्तरार्धं स्पष्टम्।

५८. कुतः स्ववर्णनम्?—उपदेष्टुमिति। तदीयेषु भक्तेषु।

पृ० २३४. ५९. 'याते'ति किमुक्तवान्?—न बुद्धिभेदमिति।

६०. विप्रपत्न्यः प्राहुः—शिरसेति। स्वमतिसरलानन्यगतिकाः स्वमतिसरलाः स्वबुद्धया सरलाश्च ताः अनन्यगतिकाश्च।

६१. 'विचार्य ब्रूही'ति प्रार्थयन्ति—स्त्रीत्वादिति। कृतापराधत्वात् पत्यादेरिति बोध्यम्।

६३. उपदिशति कृष्ण:—अनङ्गेति। इह मयि।

६८. भर्तुराशयं तस्याश्चातुर्यं चाह ग्रन्थकारः—स्वानिति।

६९. 'क्षुधा निर्वाणं प्रापिते'त्याह ग्रन्थकारः—यन्मुक्त्यर्थमिति।

७१. 'तवाऽसाध्यं भक्तसाध्यमि'त्याह ग्रन्थकारः—त्वत्पादाम्बुजेति। तत्र वने।

पृ० २३६. ७३. 'कृष्णे शुद्धप्रेम्णैव कृतार्थता' इत्याह ग्रन्थकारः—आम्नायेति। कुतः?—एक इति। ताः विप्रपत्न्यः।

७४. 'अहो! भाग्यं वनवासिनाम्' इत्याह ग्रन्थकारः—अन्नेनेति। अध्यवनि पृथिव्याम्। यं कृष्णम्।

पृ० २३६. ७८. 'पश्चात्तापेन शुद्धयती'ति स्मृतिं संस्मरुरित्याह ग्रन्थकारः—यज्ञाऽऽतिथ्येति। अनुतापेन पश्चात्तापेन। कुतः ?—प्रायश्चित्तमिति। ईदृग्विधं पश्चात्तापात्मकम्, 'पश्चात्तापेन शुद्धचति', 'प्रायश्चित्तं विमर्शनम्' इत्याद्युक्तेः।

७९. कुतो जन्मादीन् धिक्कुर्वन्ति विप्राः ?—शुद्धं जन्मेति। अमी विप्राः। तत् तस्मात्।

पृ० २३७. ८१. सखेदं साश्चर्यं चाहुः—नित्याम्नायेति। 'षण्णां मध्ये प्रत्येकं भवाधितारकमि'ति सम्बन्धः।

८२. 'संस्कारादयो भगत्प्राप्तिकरा' इत्ययं घण्टाघोषो युवतिभिः गतगर्वः कृत' इत्याहुः–गुरोरिति। गुरोर्गेहे वासः, किमर्थम् ? चरणयोः पादयोः सुचिरपरिचर्या।

८३. 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे' इति श्रुत्या अस्मत्सेवनेन आसां भगवद्दर्शनं जातं तद् योग्यम्, किन्तु अस्माभिर्भगवद्दर्शनार्थं किं कार्यमिति न जानीम' इति तपन्त आहुः–अस्मत्सेवनेति। अकाण्डताण्डवचणैः कुशलैः। अंशतो न दृष्टः। यदि स्यात् तर्हि किं कर्तव्यम् ?

८४. गोपाः किमूचुः ?—युष्मदिति। भक्ताशया भक्ताया आशया। स्पष्टोऽन्योऽर्थः। तत्प्रीतिं कृष्णस्य प्रीतिम्, अर्जयत सम्पादयत।

८५. 'किं ब्रूमः ? प्रमत्तत्वात् किमपि न कृतमि'त्याहुः—इति भूरितरमिति।

पृ० २३८. ८७. 'वयं नृ-पशवः' इति तपन्त आहुः—तत्तुष्ट्यै इति।

८८. 'हा प्रभुणैव अन्नयाचनेन मोहः कृतः' इत्याहुः—यद्दृगिति। यासां स्त्रीणां दृग्पद्मानि। यदङ्घ्रिजलजम् यस्य कृष्णस्य अङ्घ्रिजलजम्।

८९. सर्वेऽपि जानन्तोऽपि कथमधमपदवीं प्रापिता इत्यत्राह—भूभारेति।

९१. 'अहो आश्चर्यम्! लोकप्रसिद्धिविपरीतं जातम्—पत्युरिति। 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः पत्युः सङ्गात् पृथक् स्त्रीणामङ्गसिद्धिर्न। अन्यथा पत्युरसङ्गादेव अङ्गसिद्धौ। अथवा स्त्रीणां सङ्गात् पत्यङ्गसिद्धौ वयं प्रमाणीकृताः।

पृ० २३९. ९२. पुनराश्चर्येण आहुः—याः स्वयमिति । प्रमदाः सहर्षाः स्त्रियश्च 'मुत् प्रीतिः प्रमदो हर्ष' इत्यमरः ।

९४. 'स्त्रीणां सम्बन्धादस्माकं धन्यता तु भवेदेवे'ति सन्तुष्यन्ति—अमुकानामिति ।

९६. कुत एवम् ? यतः—यद् यदिति ।

९७. 'अस्मत्कृत्यं त्वत्कृतमेवे'ति वदन्तः क्षमापयन्ति—नोक्तमिति । दृष्टे तु विचारिते तु । त्वत्कृतमेव कृत्यम्, कुतः ? यद् ब्राह्मणास्यो भवान् ।

९८. चातुर्येण क्षमापयन्ति—यन्निम्नेति । 'एवं तु नैव सम्भाव्यते' इत्यन्वयः । तुल्येक्षितुः समदृष्टेः ।

९९. पूर्वं दर्शनार्थं कुतो न गताः ? —यतो मुनिभिरिति । सः कंसः । इति हेतोः ।

पृ० २४०. १०१. उपसंहरति—निर्णीतमिति ॥ २३ ॥

## चतुर्विंशोऽध्यायः

पृ० २४१. १. कृत-द्वापर-कलिधर्मानुक्त्वा यस्त्रेताधर्मो यजनम्, तदेव वक्तुं प्रतिजानाति ग्रन्थकारः—उक्तेति ।

२. प्रभुविचारं ग्रन्थकार आह युग्मेन—एत इति । ब्राह्मणाध्वरे आत्तं हविः । अरमेव शीघ्रमेव ।

३. तावद् यज्ञमिति । तन्मुख्यम्, सः इन्द्रः मुख्यो यस्मिन् यज्ञे तम् । चिकीर्षितार्थकृतधीः कर्तुमिष्टो योऽर्थः सर्वेषां स्वास्त्रीकरणरूपः, तस्मिन् कृतधीः कृतनिश्चय इत्यर्थः ।

पृ० २४२. ७. बहुकार्यस्याऽऽवश्यकत्वाद् बलसाहित्यमाह ग्रन्थकारः—मदध्वंसमिति । अस्य इन्द्रस्य । अद्रेः गोवर्धनस्य । आत्मभाजां गोपादीनाम् ।

८. प्रश्ने कारणं तु तद्वचनैरेव गोवर्धनेष्टकृद् भवामीति विचारः । तदाह ग्रन्थकारः—इन्द्रोद्देश्यकमिति ।

१०. नन्देन अन्नजलकीर्तनात् किमबोधीत्याह—दृष्टाऽदृष्टफलेति । प्रायः बाहुल्येन । आमुष्मिके पारलौकिके ।

पृ० २४३. १२. ग्रन्थकारः प्राह—यावदिति । अयम् इन्द्रः । एषां नन्दादीनाम् ।

१३. अनुवादेन किं सूचितमित्याह—अज्ञाततत्त्वविषया इति ।

पृ० २४३. १५. प्रारब्धं गुरूकरोति कृष्णः युग्मेन—पत्नीति। 'संसृति-
तारिणी गुणवती पत्नी चेत्' इति। 'इति 'चेत्' इत्यस्य
सर्वत्र सम्बन्धः, एतत् ध्रुवम्।

१६. विधाविति। अभीप्सितम् इष्टम्। अनिष्टतः शत्र्वादेः।
अपरम् उत्कृष्टम्। इष्टतः मित्रादेः। अन्यथा अनिष्टम्।
कथमेतत् ?—स इति।

पृ० २४४. १९. 'पूर्वसंस्कारकारितं कर्मैव प्रारब्धमिति स्वभाव इति
चोच्यते, अतस्तेनैव स्वभावेन वृष्टिरपि सिद्धा' इत्याह
बहुभिर्दृष्टान्तैः—अग्नाविति।

२०. 'कर्मैव प्रधानं, नेन्द्रादिरि'त्याह कृष्णः—इन्द्र इति। अन्वी-
हते पुनरपेक्षते।

२१. पृच्छति कृष्णः—स्वातन्त्र्यादिति। स इन्द्रः। 'युष्मन्मतं
किम् ?' इति सम्बन्धः। 'कर्मैव पूज्यम्, अतो यः शत-
क्रतुः, सः शक्रो भविता' इत्यन्वयः।

२२. कृष्णः पुनः पृच्छति—उत्पत्ताविति। अस्य जगतः। जने
लोके। यत् यतः यत्नः क्रियत इति शेषः। ग्रहः आग्रहः।

२३. किं ब्रूथ ?—स्वोपकारिणीति। तत् तस्मात्।

२४. कथं कर्म कार्यम् ?—कर्मारम्भ इति।।

२५. 'स्वधर्मोऽनुसरणीय' इत्याह कृष्णः—इहेति। भूमीभुजः
क्षत्रियस्य।

पृ० २४५. २६. विकल्पेन पृच्छति कृष्णः सर्वान्—यच्चेति। यत् अन्त्यं
यदि अविदितं चेत्, यत् आद्यं यदि विदितम्। यत् अचरमं
यदि पूर्वं वैदिकम् अधर्मतः चेत् नेष्टम्, आद्यं धर्मतश्चे-
दिष्टम्। तत् तर्हि।

२८. कृष्णः प्राह—तातेति। तत् तस्मात्। यत् यतः।

२९. कृष्ण उवाच—स इति। अस्मिन् जगति।

३१. इन्द्रसादृश्यादयमेव पूज्य इत्याह—विमानीति।

पृ० २४७. ४१. 'सवादुत्सवः श्रेयानित्याह—इन्द्रोद्देशादिति।

४२. 'मयि प्रीतिश्चेद् गोवर्धनाय बलिर्देय' इत्याह—मत्प्रीति-
कृदिति। वाञ्छाक्षणार्पितफलाय वाञ्छाक्षणे इच्छाक्षणे
अर्पितानि फलानि येन तस्मै।

४४. ग्रन्थकार आह—एवमिति। वाङ्-मन्युं वाचा मन्युम्।
समन्युं समखम्।

पृ० २४८. ४९. किमभिप्रायः कृष्णः ?—दत्तमिति ।

पृ० २४९. ५१. नात्र अद्भुतमित्याह ग्रन्थकारः—यद्वागिति । वागंशावलम्बेन वेदांशावलम्बेन । विधिः 'यजेते'त्यादिः, ब्रह्मा च । साधु यथा स्यात् तथा । अत्र न च अद्भुतम् ।

५२. 'कृष्णप्रियः सर्वप्रियो भवती'त्याह—प्राणिमात्रेति ।

५७. गोवर्धने किमिति स्वरूपाविष्कारः ?—नाऽविष्णुरिति ।

पृ० २५०. ५९. बृहद्वपुर्ग्रहणे कोऽभिप्रायः ?—कृत्वेति । तथा बृहद्वपुः ।

६०. भूरिबलिभक्षणे कोऽभिप्रायः ?—दुर्धर्ष इति । प्रकृते जठरानले । अस्य जठरानलस्य ।

६३. उत्सवे किं स्पष्टमभूत् ?—दातेति ।

६५. चरितेन किमबोधि ?—त्रेताधर्म इति । व्यस्तो विपरीतः ।

६६. ग्रन्थकारः उपसंहरति—वन इति । क्षमा योग्या ।। २४ ।।

## पञ्चविंशोऽध्यायः

पृ० २५१. १. 'एवं शुकः चतुर्युगधर्मान् निरूप्य कृपया पुनः कलिस्थधर्मानाह' इत्याह ग्रन्थकारः—एवमिति । ऋषिः शुकः ।

२. कः शुकाशयः ?—प्राधान्यमिति । अतिशायिमदिता अत्यन्तम् उन्मादः । अविधितः कुमार्गतः । तत्प्राप्तितः तस्य वसोः प्राप्तितः । तत् तस्य, तस्य धनस्य मदस्य वा । अचलोद्धारार्थम् स्वदेशकल्याणार्थम् ।

४. इन्द्रस्य केन हेतुना क्रोधः ?—इमेऽपीति । अन्वयविधिं' वंशागतविधिम् ।

५. बलवत्त्वं दुर्बलेषु इति न्यायेनाऽऽह ग्रन्थकारः—कंस इति । दुर्नयराशिनाशित-महायज्ञाद्यशेषक्रिये दुष्टानां दूषितानां, नयानां नीतीनां राशिभिः महायज्ञाद्यशेषाः क्रिया येन तस्मिन् कंसे । गोपतौ नन्दे ।

६. इन्द्रस्याऽसमीक्ष्यकारित्वं दर्शयति ग्रन्थकारः—यदेकेति । अयं कृष्णः ।

पृ० २५२. १०. 'इन्द्रः प्रमत्त इति नाश्चर्यम्, किं तर्हि ? व्रजजनान् प्रमत्तानूचे इत्याश्चर्यमि'त्याह—ऐश्वर्यमिति । अन्याऽसुलभान्नवस्त्रविविधालङ्कारनित्यागमः अन्यदुर्लभान्नादेर्नित्यं प्राप्तिः ।

पृ० २६९. १३२. योग्यमेवेदं जातमित्याह ग्रन्थकारः—कृष्णाञ्जन इति। सहस्रदृष्टिस्थितिः इन्द्रदृष्टिस्थितिः। क्षमं योग्यम्।

१३५. निवृत्तैर्मेघैः किमबोधि ?—न नष्टमिति। गोकुलं धेनुकुलम्, तव वाक्कुलम् अस्माकमुदककुलञ्च। तैः मेघैः।

१३६. गोवर्धन इति नामग्रहणे कारणम्—अतीतकर्मभिरिति। ऋषिः शुकः।

पृ० २७०. १३७. गोवर्धनं तत्रैव किमिति न्यधात् ?—स्थानभ्रष्टा इति।

१३९. यद्वा भूमेर्भयनिवारणाय न्यधात्—दुष्टानेकेति। अवनिभृतः राजानः। मया भूम्या। योऽयं कृष्णः।

पृ० २७१. १४५. 'स्वस्थाने' इत्यनेन सूचितमर्थमाह ग्रन्थकारः–इन्द्रः पुरेति।

१४६. कुतो ह्येवमर्थः ?—अत एवेति।

१४७. स्वाराज्ययोग्यः कः ?—यः स्यादिति। भूभृदिन्द्रं गोवर्धनम्। औज्झीत् अत्यजत्।

१४९–१५०. न चैवं करिष्यति प्रभुः, तर्हि जनः किं वदेत् ? इति युग्मेनाऽऽह ग्रन्थकारः—बलिरिवेति।

पृ० २७२. १५४. मोहजनकः प्रेमभाव इत्याह ग्रन्थकारः—मायात इति। यत्कलितान्तराः प्रेमव्याप्तान्तराः। अन्यथा न चेदेवम्।

१५५. आशीर्दानं योग्यमेवेत्याह ग्रन्थकारः—दृष्ट्वाऽद्भुतमिति।

१५६. रामकर्तृकाशिषि कारणम्—शिरोभिरिति। उदधारि ऊर्ध्वं धृतः। धराधारी भूभृत् गोवर्धनोऽपि।

१५७. देवादिस्तुतौ कारणम्—यस्योत्कर्ष इति। लोके पृथ्व्याम्, नाके स्वर्गेऽपि।

पृ० २७३. १५९. उपसंहरन् कृष्णं स्मरति ग्रन्थकृत् युग्मेन—कथं वृष्टिरिति।

१६०. न तद्धीरिति। ब्रह्मणोऽपि तद्विषयिणी बुद्धिर्न, तत्राहं तु अलं एव। अतः बहुविकल्पैः जल्पनैर्वा अलं पर्याप्तमिति भावः। 'इदं सर्वं मदीयं कर्तव्यं यदीयप्रभावादासीत्' इति योज्योऽन्वयः॥ २५॥

## षड्विंशोऽध्यायः

पृ० २७४. १. तदेवं सकलदुःखनिवर्तक श्रीकृष्णं शरणीभावेनोपलब्धं फलं ज्ञात्वा सर्वं त्यक्त्वा कलौ हरिभजनं कार्यमित्याह ग्रन्थकारः—श्रीगोविन्देति।

पृ० २५८. ४८. गोपाः प्रार्थयन्ति—हितं वेति। प्रवृत्ता प्रस्तुता।

४९. गोपा ऊचुः—न वारिवाह इति। न वारिवाहः मेघो न, कुतः? यदकालगः। तर्हि कोऽयम्?–'नवाऽरिवाह' इति।

५१. 'इदानीं किमुपेक्षसे' इत्याहुर्गोपाः—न नाशिता इति।

पृ० २५९. ५२. गोपाः सकरुणं पृच्छन्तः प्रार्थयन्ति—श्रीकृष्ण इति।

५५. गोपाऽऽक्रन्दितं श्रुत्वा भगवानभयदं स्वदर्शनं ददावित्याह ग्रन्थकारः—इत्थमिति। तदब्दघोषं तेषां मेघानां शब्दम्। विभाव्य विचार्य। सवारिहृत् सः वा अरिहृत् इति च्छेदः। सवस्य गोवर्धनयागस्य वा अरिः इन्द्रः तं हरति दूरयतीति सवारिहृत्, सः वारिहृत् इति वा।

५७. 'वृष्टिपूरात् कृपापूरोऽधिको जात' इत्याह ग्रन्थकारः—आसीदिति।

पृ० २६०. ६३. 'इन्द्रे क्रोधो न कार्य' इति कृष्णविचारमाह ग्रन्थकारः—क्षुत्क्षुब्धकुक्षिरिति। अनाप्तविहिताशनभागभोगः शत्रुकृतभोजनभागभोगः सन्। अस्य इन्द्रस्य तु क्रोधकरणं युक्तमेव।

पृ० २६१. ६५. 'गोपानेव प्रतिविधिकथनं किमिति न?' इति कृष्णमुखेनाह—प्रागपीति।

६७. उच्छृङ्खलानां सङ्गात् साधुरपि निन्दार्हो भवतीति युग्मेनाह ग्रन्थकृत्—शान्त इति। एतादृगपि शचीशः निन्दामगात्, कुतः? एकोच्छृङ्खलधीजडाश्रयवशात्।

६८. किं चक्रे कृष्णः?—आलोच्यैवमिति।

पृ० २६२. ७२. ततः किं विचार्य गोवर्धनं दध्रे इत्याह—गुरुत्वादिति। सः इन्द्रः। एषः गोपालादिः। विरुद्धं व्रतम्।

७४. यद्वा कृष्णो विचारयति—क्षमागतोऽहमिति।

७८. यद्वा किञ्चित्कथनार्थं गोवर्धनौन्नत्यं चकार कृष्णः—शूरोऽसीति। तत् कुतः?—यदेष इति।

पृ० २६३. ८०. यद्वा अयं कृष्णविचारः—'गोवर्धनोऽयं मन्निमित्तं लोकैः धिक्कृतो भवेत्, स मा भूत्, किं कथयिष्यन्ति लोकाः?' तत्राऽऽह—अत्तुमिति। एष गोवर्धनः 'अधुना तु मौनमुरीकरोति, तद् धिक्पदार्हो न भवेत् किम्?' इति योज्यम्। मत्कृतेः हेतोः। तदवनं गोपरक्षणम्।

पृ० २६४. ८८. दृशा कर्तुं समर्थोऽपि करे किं दध्रे ? तत्र कृष्णविचारोऽयम्—विधायेति ।

९१. यद्वा, सदसत्कर्मफलदाय करे गोवर्धनं दध्रे—यो यदिति । द्राक् सद्यः । बाहौ 'इन्द्रादयो बाहव आहुरुत्स्नाः' इति हि वचनम् । मंक्षु तत्क्षणम् ।

९२. यद्वा, इन्द्रानुभवायेति ग्रन्थकारः प्राह—दङ्मात्रेणेति । स्वजितारितः पर्वतात् । अखिलोन्मादोत्सादचणा सर्वोन्माद-दूरीकरणनिपुणा भवतीति एषः ।

९३. यद्वा, कुतः पर्वतं पुरश्चक्रे ?—अनुचितकर्मारम्भीति ।

पृ० २६५. १०८. अनेन किं सूचितम् ?—निजवैरिमदेति । तत् तर्हि । स्वयं पर्वतार्धस्थितद्रा किमबोधयत् ?—स्वभावसिद्धमिति ।

१११. वलः किमिति तूष्णीमास ?—अशेषकार्यमिति । स वलः ।

पृ० २६७. ११४. कृष्णः प्राह—मदभिहितेति । मदभिहिता मया अभिहिता । यात आगच्छत । बलेर्यथा मया अभिहिताऽधरगतिः । अचलानुयोगतः अचलायाः पृथ्व्याः, अनु पश्चात् योगतः सम्बन्धात् मदभिहिताधरगतिरपि युष्माकं सुखार्थं भवितेति ज्ञात्वा भीतिं त्यक्त्वा आगच्छतेति भावः ।

११५. इत्युक्तेऽप्यनागच्छतो गोपादीन् वीक्ष्य पुनः कथयति कृष्णः—मद्गिरिस्थैर्येति ।

११६. साश्चर्यमाह ग्रन्थकारः—यत्किञ्चित्कालमिति ।

११७. क्षुत्तृट्त्यागेन आश्चर्यमित्याह ग्रन्थकारः—श्रीशेति ।

पृ० २६८. १२१. सप्ताहवृष्टौ किं कारणम् ?—यज्ञघ्नस्येति । देवपतेः इन्द्रस्य ।

१२३. यद्वा, स्वभावोऽयमिन्द्रस्येत्याह—सप्ताहमेवेति । सप्तभागमिति । तथा चोक्तम्—

'चकर्त सप्तधा गर्भं वज्रेण कनकप्रभम् ।
रुदन्तं सप्तधैकैकं मा रोदीरिति तान् पुनः ॥'

( भा० ६.१८.६२ )

१२५. 'पदात्' इत्येकवचनेन सूचितमर्थमाह ग्रन्थकारः—अचलोद्धरणमिति । भुजगेशस्य बलरामस्य ।

१२६. चमत्कारमाह ग्रन्थकारः—वयं धारयाम इति ।

१२७. इन्द्रस्य गतगर्वत्वे कारणम्—सदयकर इति । विस्मयता आश्चर्यता गतगर्वता च ।

पृ० २५२. ११. स्वाज्ञानमजानता कृतं सर्वं निरर्थकं भवतीति इन्द्रचरितात् स्पष्टमित्याह ग्रन्थकारः—नीतिज्ञत्वमिति । वृषा इन्द्रः ।

१२. 'एभिर्भाषणैः कृतघ्नत्वप्रदर्शनाय इन्द्रेण बद्धः परिकर' इत्याह ग्रन्थकारः—यज्ञध्वंसकृदिति । अनेन इन्द्रेण । श्रीधरं प्रतीति शेषः ।

पृ० २५३. १३. साश्चर्यमाह ग्रन्थकारः—वसुदेवजातमहिमेति । वसुदेवजातस्य कृष्णस्य महिमाऽवहेलनम् । अचिन्तयन्, अविचारयन्नित्यर्थः । एभिः गोपैः ।

१४. 'मर्त्यमि'त्युक्तिः मदेनैवेत्याह ग्रन्थकारः—यस्येति ।

१७. 'किमाश्चर्यमतः परमि'त्याह ग्रन्थकारः—यत्किञ्चिदिति ।

पृ० २५४. २१. यद्वा 'न्यायानुगमिन्द्रकर्मे'त्याह ग्रन्थकारः—योऽन्यमिति ।

पृ० २५५. ३०. शुकेन किं बोधितम् ?—ये कान्ताभिरिति । स्वतोऽपि गर्जन्त इति योज्यम् । अध्वनि बोधितम् । ऋषिणा शुकेन ।

पृ० २५६. ३४. 'ईश्वरं शरणं ययुरि'त्येव युक्तमित्याह ग्रन्थकारः—शरणमिति । विधुतापरोद्यमाः त्यक्तापरोद्यमाः ।

३७. 'सुतांश्च कायेने'त्युक्तौ कारणमाहुः गोपाः—दीनानामिति । यातोपेक्षम् उपेक्षारहितम् ।

३९. पादमूले आगमने कारणम्—दिष्टेनेति । उत्तरार्धात् पूर्वं 'किन्तु' इति योज्यम् ।

पृ० २५७. ४०. यद्वा—यद्दृक्कोणेति । यस्याः श्रियः दृक्कोणानां कटाक्षाः तैः लब्धः विभवोल्लासः येन सः, स्वरीशः इन्द्रः । तत् तस्मात् अर्थ्या प्रार्थ्या । तद्गृहं चरणकमलम् ।

४१. यद्वा किमभिप्रायेण चरणं ययुर्गोपाः?—आस्येनेति । अखिलाङ्गेषु सत्सु ।

४४. नन्दः प्रार्थयति श्लोकद्वयेन—हे श्रीकृष्णेति । मां नन्दमेव, ते गोपाः । किं तत् ?—एतद्बुध्यनुसारिण इति । तत् तस्मात् ।

४५. तच्छ्रीकृष्णेति । अवितथं सत्यम् ।

पृ० २५८. ४७. गोपानां त्रिविधं भाषणम्, तत्र केचिदाहुः—किं कृष्णेनेति । 'किं कृष्णेन विधेयमि'त्यपरे गोपा आहुः । अन्ये च 'तादृग्यज्ञे'ति प्राहुः ।

पृ० २७४. ३. कृष्णचरितं गोपानां विस्मयाऽऽनन्द-सन्देहोत्पत्त्यै समभूत्, एतद्योग्यमेवेत्याह ग्रन्थकारः—वृद्धानामपीति। इन्द्रियसमुद्धारप्रकारः गोकुलोद्धारप्रकारः। गोवर्धनोद्धारिणि कृष्णे।

४. 'वयं मूर्खाः कुतो न ?' इत्याहुर्गोपाः—नीता नाशमिति। अनेन कृष्णेन। दुर्ग्राहिः कालीयः। अपरोक्षं प्रत्यक्षम्।

५. ग्रन्थकारः भगवन्मायावैभवं बहु मानयति—यत्केनापीति। नैव चरितं दृष्टम्। व्रजजनाः गोपादयः। असच्छङ्किनः असती शङ्का येषां ते। नः भक्तानाम्।

पृ० २७५. ६. शङ्कायां हेतुः कलिरित्याह ग्रन्थकारः—नानाविधानीति। 'अनुभवे जातेऽपि चरिते विषये शङ्का' इति योज्यम्।

१०. रहस्यकथने नन्दस्य निःशङ्कं प्रवृत्तेः द्वितीयं किं कारणम् ?—एतन्नामकृताविति। अदयः निर्दयः।

१२. गोपाः सखेदं किमाहुरित्याह—नन्दस्त्वेवमिति। अस्य कृष्णस्य।

पृ० २७६. १३. पश्चात्तापं कुर्वन्त आहुर्वयस्याः—न कस्यामिति। अधरभावेन निकृष्टभावेन। वयम् अपराधैकसदनम्।

१६. अहो दयालुत्वं कृष्णस्येत्याहुः—अहो इति। कृष्णं दृष्ट्वा आहुः—प्रसन्नास्य इति।

१८. ज्ञातमित्याहुः—निर्णीतमिति। तत् कुतः ?—दृष्ट इति। तु तर्हि।

पृ० २७७. २२. चरितेन सूचितं कलिस्थजनवृत्तमाह—जानन्निति। तदुत्तरकृतौ कृष्णस्योत्तरकालीनलीलायाम्।

२४. नमति ग्रन्थकारः—विगतार्तीनिति ॥ २६ ॥

## सप्तविंशोऽध्यायः

पृ० २७८. १. तृतीयेऽस्मिन्नध्याये नामसङ्कीर्तनं विदधाति ग्रन्थकारः—एवंविधमिति।

३. सुरभिसाहित्ये कारणं वदन् कृष्णाभिप्रायमाह ग्रन्थकारः—मत्स्तुत्येति। गोव्रजः गोसमुदायः। यत् यस्मिन्।

५. एकान्ते आगमनस्य कारणमाह ग्रन्थकारः—स्वस्वामीति। स्पशेन दासेन।

पृ० २७८. ७. कुतश्चरणस्पर्शः ?—वराऽभयकराविति । गिरिसमुद्धृतौ विषये, तदभयार्थनाकामुकः तस्मात् कृष्णात् अभयार्थनाकामुकः ।

पृ० २७९. ९. 'त्वयि तु क्रोधादिर्नास्त्येव, तथाऽपि अभ्यासवशात् प्रार्थये, रुषं त्यजे'ति इन्द्रः प्राह—रुण्मोहेति । अन्यजनकृताभ्यासा अन्यजनैः सह कृतः अभ्यासो यया ।

१२. इन्द्रः प्राह—स्वीयावनार्थमिति । ईहा लीलैव ।

१४. स्वापराधमङ्गीकुर्वन् क्षमापयति—आसीदिति । श्रीमत्तत्त्वमपीति । त्वत्कर्तृगोवर्धनोद्धारात् मम श्रिया मत्तत्वं स्फुटं समभवत् । यद्वा श्रीमतस्तव तत्त्वमपि स्फुटं समभवत् । एवञ्च सुराधिकरुचिः श्रीमत्त्वं च मम मत्तत्वहेतुः, तवापि सुराधिकरुचिः श्रीमत्तत्त्वञ्चास्तीति समो हार्दाशयः । तथापि स्वामी त्वं सेवकोऽहमिति कस्याऽपि अग्रे त्वया मे अपराधो न वाच्य इति भावः ।

पृ० २८०. १६. पुनः प्रार्थयति—जातमिति । परम् अधिकम् 'तथापि एषः सर्वेशितुः पादः' इति योज्यम् । तत् तदा ।

पृ० २८१. २४. अधमोऽहमित्याह इन्द्रः—नाऽऽलोचीति । त्वच्छलं कुर्वता, मयेति शेषः ।

२६. महती मे लज्जा इत्याह इन्द्रः—प्राचीनादिति । अधिकोल्लसद्गुरुपदात्, अधिकोल्लसत् गुरु महत् पदं स्थानं यस्य तस्मात् ।

पृ० २८२. २७. कुतः एवं कृतम् ? तत्राऽऽह इन्द्र. प्रसन्नं दृष्ट्वा—निगृह्येति । पदगतम् अर्पितम् । नियोगात् प्राक् आज्ञायाः प्राक् ।

२८. इन्द्र आह—वनमालिन इति । मदागः ममापराधः ।

२९. इन्द्रः प्राह—न श्रुतमिति । ते त्वया ।

३१. अनुग्रहस्तु जात एवेत्याह—सर्वतोमुखजातस्येति ।

पृ० २८३. ४०. इन्द्र उवाच—नाऽप्रतिष्ठेति । दाशार्हः दाशेषु योग्यः रामावतारप्रसङ्गे, दाशार्हकुलोत्पन्नश्च ।

पृ० २८४. ४१. अनुगृहीतोऽस्मीत्याह—त्वमन्नेति । तत् तस्मात् ।

४४. विमदोऽहमित्याह—स्वस्थोऽहमिति ।

४७. हासे किं कारणम् ?—लब्धप्रतिष्ठस्येति । इतरस्य अप्रतिष्ठितस्य ।

पृ० २८५. ५२. कृष्णः प्राह——अनुशासनमिति । उक्तञ्च——
'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥'
( गीता० १२.६-७ )
लब्धवर्णो विचक्षणः । जातत्रपि पुनरपि ।
५३. आज्ञापयति——आस्तामेतदिति । एतु लभतु ।
५५. ग्रन्थकारः प्राह——यदिहेति । अस्मिन् इन्द्रे ।

पृ० २८६. ५७. ग्रन्थकारः प्राह——हस्ताब्जैरिति । कषणं कण्डूयनम् । पदं स्थानम् । अस्मिन् कर्मणि गोरक्षणकर्मणि ।
६०. सुरभिः प्रार्थयति——गोगोरक्षकेति । विशदं स्पष्टम् ।
६२. अभिषेकोद्यमकरणे कारणं प्रदर्शयन् सुरभिविचारमाह ग्रन्थकारः——अस्माभिरिति । ईहया इच्छया । परः अन्यः ।

पृ० २८७. ६४. 'अभिषेक्ष्याम' इत्युक्तौ कारणम्——उद्दिश्येति । वस्त्वर्पणं जलार्पणम् । जातात् कृतात्, इति हेतोः । अग्रे पूर्वम् ।
६८. प्रथमं स्वपयसाऽभिषेके कारणम्——आकाशेति ।

पृ० २८८. ७०. किमिति गोविन्दमित्यभ्यधात् ?——मन्दाक्षभावस्थमिति । भर्तुः इन्द्रस्य । शुभाक्षीरचिताभिषेका शुभाक्षीति च्छेदः, शुभेति च; क्षीरेण चितः सम्पादितः अभिषेको यया ।
७४. नाम्नः श्रैष्ठ्यमाह——सन्त्विति । उत्तरार्धे 'परन्तु' योज्यम् ।

पृ० २८९. ७७. गोविन्दनामश्रवणात् नारदाद्यागमनं कुतः ?–भूताऽसुरेति । भूतादिरूपतमःप्रणाशे । मिहिरः सूर्यः ।
७८. 'लोकाः परां निर्वृतिमि'त्यादिना उक्ते आनन्दे नाश्चर्यमित्याह ग्रन्थकारः——सामान्येऽपीति । भूभृद्वरधरकराभिषेचनतः भूभृद्वरधरे श्रीकृष्णे ऐरावतकरोद्धृताकाशगङ्गाभिषेचनतः ।
८२. एवं तावत् भगवन्नामकीर्तनरूपकलिधर्मप्रदर्शकात् चरितात् सूचितं 'भक्तो भगवत्प्रिय' इत्यर्थमाह ग्रन्थकारः——इन्द्रादपीति । देवपतिः इन्द्रः ॥ २७ ॥

## अष्टाविंशोऽध्यायः

पृ० २९०. २. नन्दचरितात् किं सूचितम् ? प्रगल्भेनाऽपि लोकाचारानुसारिणा भाव्यमिति प्राह ग्रन्थकारः––कृतार्थस्येति । अस्मिन् संसारे । प्रगल्भोऽपि, 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इत्युक्तलक्षणप्रतिभान्वितोऽपि । व्रजेशे नन्दे ।

३. स्वयं तत्र किमिति गतः ?––मच्छासनादेवेति । सः कृष्णः । एनं वरुणम् ।

पृ० २९१. ८. यद्वा, कृष्णः प्राह––नीतिज्ञ इति । प्राप्तोऽप्रतिष्ठापदम्–– अप्सु ( जलेषु ) प्रतितिष्ठन्ति मज्जन्ति ते अप्प्रतिष्ठाः, तेषामापदं विपदं प्राप्तो निजसेवको नन्दः । यद्वा यः कोऽपि सेवकः अप्रतिष्ठास्थानं प्राप्तश्चेत् तद्गृहं गत्वा उत्तमोक्तिभिरलं प्रतिष्ठापदं नेय इति नीतिज्ञः श्रीकृष्णः । यद्वा, नीतिज्ञः सेवको वरुणः ।

१०. यद्वा को विचारः कृष्णस्य ?––तस्येति । सः वरुणः । प्रमत्तः पुनः भक्तभयप्रदः । त्रिसमयस्वीयाऽभयाऽऽत्तव्रतः– भूतभविष्यद्वर्तमानकालेषु भक्ताऽभयदानरूपम् आत्तं व्रतं येन सः ।

११. त्वन्माहात्म्यवर्णने मे न शक्तिरित्याह वरुणः––यत्रोरगेन्द्रेति । श्रुत्यास्यः ब्रह्मा, श्रुतयः आस्ये यस्य सः । महिम्नि विषये ।

पृ० २९२. १४. अहो भाग्यमित्याह वरुणः––हृदयमिति ।

१७. आस्तां तत्, परन्तु मत्पिता कुत आनीतः ? तत्राऽऽह वरुणः––अस्माभिरिति । कीदृक् स इति योज्यम् । एकदेति शेषः । ततः हेतोः । अयम् असुरम् ।

२०. अन्यदपि कारणम् ?––नन्दद्वारेति ।

पृ० २९३. २२. ततः किम् ?––एवं ममेशेति । सदाऽप्रतिष्ठो जातः ।

२५. अग्रे को विचारः ?––भूय इति । इतः अग्रे । पतिता स्वामित्वं निपतिता च । सम्बन्धस्तु––मे मतिः अनुद्भूतपूर्वा या आशा तस्यां पतिता निपतिता न भूयात् अहं अपूर्वाशायाः पश्चिमदिशः पतिरस्मि तस्य भावस्तत्ता इति अहङ्काररूपा मे मतिः कदापि न भूयादिति प्रार्थये वा ।

पृ० २९४. २९. विस्मयेन कथनं युक्तमेवेत्याह ग्रन्थकारः——कदाचिदिति। अस्य द्रष्टुः। सः नन्दः, तान् गोपान्।

३२. दर्शनसुखं दातुं किमित्यैषीत्? तत्र कृष्णविचारमाह ग्रन्थकारः——मात्रेति। पुरः अग्रे।

३५. एवं दुर्दर्शदर्शनेन किमसूचयत्——सत्यमिति। स्वजनो भक्तः।

पृ० २९५. ३६. किं बोधयन् स्वलोकाखिलप्रत्यक्षतां प्रापयामास——अस्मिन्नेवेति। गूढा गुप्ता। नभोवत् आकाशवत्। विभोः व्यापकस्य। किं ध्वनितम्?——यद्यपीति। ब्राह्माशयेषु ब्राह्मणहृदयेषु। तद्ध्रदतत्प्रदर्शनात् ब्रह्मह्रदे वैकुण्ठस्य प्रदर्शनात्। ग्रन्थकारः सकरुणं प्रार्थयति——तद्दर्शितेति। तत्केलियोग्यमेव श्रीकृष्णमूर्तिम्॥ २८॥

## एकोनत्रिंशोऽध्यायः

पृ० २९६. २. पञ्चाध्याय्याः श्रैष्ठ्यम्——प्राणा इति। महायज्ञाः—
'पाठो होमश्चाऽतिथीनां सपर्या तर्पणं बलिः।
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः॥'
देवद्रुमाः मन्दार-पारिजातक-सन्तान-कल्पवृक्ष-हरिचन्दनाः। रसमयाः रसरूपाः। प्रेष्ठप्रबोधोदयः प्रेष्ठस्य आत्मनः कृष्णस्य प्रबोधो ज्ञानं तस्य उदयः परप्रेमास्पदरूपः कृष्ण इति ज्ञानोदयो यत्र लसतीत्यर्थः।

३. स्वस्वभावनानुसारमेतदाश्रयात् इष्टसिद्धिः——योगीति।

५. राज्ञः विना प्रश्नं कुतो ह्युक्तवान्? तत्र ग्रन्थकारः भक्तियोगबुभुत्सुं ज्ञात्वैव अवोचदित्याह——योगेनाऽपीति। तत् तस्मात्। 'कीदृक् असौ योगः? कथमस्य विधिः?' इति योज्यम्। प्रागावेदितयोगवित्स्थितिम् पूर्वं निवेदिता योगविदां स्थितिर्यस्मै तम्।

७. रसप्राप्तौ पञ्चभूमीराह ग्रन्थकारः——योग इति। रसग्रहः रसोदयः।

पृ० २९७. ११. 'भगवानपी'ति (१०.२९.१) 'अपेः' स्वारस्यमाह——रन्तव्यमिति। ता अपि चक्रिरे।

१४. ग्रन्थकारः प्राह——विना मन इति।

पृ० २९८. १६. नपुंसकं मनः कथं रतिसुखभाक् ?--अघटितघटनेति ।

१७.. मायाश्रये कारणमाह ग्रन्थकारः--स्वीया चेदिति ।

२०. यद्वा--नाऽहमिति । बोधविधूदयः-'मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेः', 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत' इति श्रुतेः । निखिलसत्सन्तापसर्वङ्कषः निखिलानां सतां सन्तापसर्वङ्कषः । विलसन्मायः विलसन्ती माया येन यस्य वा सः ।

पृ० २९९. २४. ग्रन्थकारः प्राह--पूर्णा इति । 'स्वयं पूर्णा अपी'ति भावः । तदनुष्ठानं धर्मस्य ऽनुष्ठानम् । तत् तस्मात् ।

२५. गाने हेतुः--गायन्तमिति । 'तस्माद् गायन्तं स्त्रियः कामयन्ते' इति हि श्रुतिः । कलं मधुरम् ।

२६. कुतो मनोहारकं जगौ ?—मा भूदिति ।

२९. श्वश्र्वादिभिः 'रात्रौ कुत्र व्रजसी'ति पृष्टे सति गोप्युक्तयः । कुञ्जे शरदि वसन्तमिति । ( आश्चर्यम् ) शरदि वसन्तं ऋतुम् । यद्वा कुञ्जे वसन्तं निवसन्तम् । कुसुमेष्वनुभूतविविधरसगन्धम्--कुसुमेषु पुष्पेषु, कुसुमेषुः कामश्च । कामेनाऽनुभूताः विविधाः रसाः गन्धाश्च यस्मात् । पूर्वमनङ्गत्वेन रसादीनां नाऽनुभवः, श्रीकृष्णाल्लब्धशरीर एव रसादीननुभवतीति भावः ।

३०. गच्छसि चेत् त्यजामः, तत्राऽऽह काचित्—त्यजन्तु बतेति । जनः किं वदिष्यति तत्राऽऽह--ब्रवीत्विति । क आह्वयति त्वाम् तत्राऽऽह—करोतीति । को लाभः, तत्राह—ततश्चेति । परमा उत्कृष्टा भवामि, यतः धरामृतरसं भूस्थमृत्युनिवारकरसं पिबामि, 'रसो वै सः' इति श्रुतेः । अन्योऽर्थः स्पष्टः ।

पृ० ३००. ३२. काचित् मुरलीं प्रति प्राह—दैत्यारिरिति । एषः कृष्णः । काचिदाह—

'सौधं धाम मुखाम्बुजं भगवतो वक्त्रासवप्राशनं
शय्या चाऽधरपल्लवोऽथ मृदुलाङ्गुष्ठस्तदुच्छीर्षकम् ।
अङ्गुल्यस्तव सेवने निरलसा ब्रूमः किमन्यत् सुखं
हा हा वैरिणि हे तथापि मुरलि त्वां नैति निद्रा न किम् ॥'

पृ० ३००. ३६. अलक्षिततत्त्वे कारणमाह ग्रन्थकारः—सर्वा इति। एकत्राऽऽगमने हेतुः—एकश्चेदिति। श्रीकामिनः कृष्णस्य।

३८. तत्राऽपि गोप्यः कथं जग्मुः? तत्राऽऽह ग्रन्थकारः—'नाश्चर्य'मिति। यत्पत्यपत्येति।

४०. दुग्धं त्यक्त्वा कारणमाह गोपी—यत्स्वयमिति। घनं मेघं कृष्णं च।

४१. संयावं त्यक्त्वा अन्याऽऽह—सुस्निग्धेति। मुग्धः सुन्दरः। सयावकामितपदाम्बुजरागम्—संयावकः भक्ष्यपदार्थविशेषः, सम्यग् यावको लाक्षारसश्च। सम्यग् यावकेन अमितः अपरिच्छिन्नः महान् पदाम्बुजे रागो यस्य तम्।

४३. कुतः पुत्रपरित्यागः? तत्र गोपी काचिदाह—स्वसुतानिति। यदङ्गसङ्गिनी कृष्णाङ्गसङ्गिनी।

४४. पतिं कुतस्तत्याज? तत्र गोपी प्राह—पतिशुश्रूषणमिति। 'परन्तु विदेहावस्थौ' इति योज्यम्।

पृ० ३०२. ४६. कुतश्चन्दनादिलेपस्यत्यागः? तत्र गोपी आह—सिद्ध्येदिति।

४८. अञ्जनं त्यक्त्वा केनाऽभिप्रायेण आगमनम्? तत्र काचिदाह—अञ्जनेनेति।

४९. वस्त्रादिव्यत्यासो युक्त इत्याह ग्रन्थकारः—सञ्जायत इति।

पृ० ३०३. ५४. राज्ञः कः प्रश्नाशयः?—या वृत्तिरिति। तत् तस्मात्, तत् पदम्।

५५. किं तदुत्तरम्?—मान्येति। इह विषयेषु। अव्याहता अस्थिरा 'एतत् उत्तरं भाति, कुतः? श्रीशैकवृत्त्युक्तितः।'

पृ० ३०४. ५९. कः कृष्णाशयः?—यथेति।

६०. सौम्येति। परतः पश्चात्।

६२. भूलेखनस्य कोऽभिप्रायः? तत्र गोप्यः भुवं पृच्छन्तीत्याह ग्रन्थकारः—वस्त्वस्तीति। कौ भूमौ कुतः?—यत् यस्मात् विपुला एषा अनुयोक्तुं प्रोष्टुम्।

६७. 'व्रजस्याऽनामयं कच्चित्' इत्यत्र अन्याऽऽह—व्याकुलमिति।

पृ० ३०५. ७०. 'रजन्येषा घोररूपे'त्यत्र काचिदाह—घोरेयमिति। पुरः प्रथमविहारादिकमेव कुर्म इति भावः।

७१. 'प्रतियाते'त्यत्र उत्तरं ददौ काचित्—ज्ञानेति।

७२. 'नेह स्थैर्यं स्त्रीभिरि'त्यत्र काचिदाह—या स्युरिति।

पृ० ३०५. ७३. 'मातरः पितरः पुत्रा भ्रातरः पतयश्च वः । विचिन्वन्ती'-त्यत्राह—ते शोधयन्तीति ।

७४. 'मा क्रुद्धं बन्धुसाध्वसमि'त्यत्राऽऽह—प्रेष्ठस्येति ।

७५. 'दृष्ट वनमि'त्यत्राऽऽह—लतेति ।

पृ० ३०६. ७७. 'क्रन्दन्ति वत्सा' इत्यत्र कारणम्—अबला इति ।

७८. 'प्रीयन्ते मयि जन्तवः' इत्यत्र कारणम्—मय्यस्तीति ।

७९. 'भर्तुः शुश्रूषणमि'त्यत्र कारणम्—अमाययेति ।

८०. 'प्रजानां चानुपोषणमि'त्यत्र कारणम्—प्रजापतीति ।

८१. 'दुःशीलो पतिः स्त्रीभिरि'त्यत्र कारणम्—श्रीशाङ्ग्रीति । अघस्य तु न, 'आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः' इति याज्ञवल्क्यस्मृतिः ।

८४. तथापि स्वकीयानुल्लङ्घ्य कथमागता इति चेत् तत्राह अन्या—कान्तस्त्वमिति ।

८५. शुद्धभावेन प्राहुः—पुत्रादय इति । अनङ्गसुखं मोक्षसुखम् ।

पृ० ३०७. ८६. वेणुनाऽऽहूता आगता इत्याहुः—कथमिति ।

८९. अवदन्त प्रत्याहुः–तनुसुखमिति । अतनुसुखं महत् सुखम् ।

९०. पात्रापात्रविचारोऽस्तीति तत्राहुः–देयादेयेति । द्राक् शीघ्रम् ।

पृ० ३०८. ९२. 'नादत्त मे श्रुते लोक' इति न्यायमाहुः–मूर्त इति । तत्तस्मात् ।

९३. लौकिकं व्यवहारमाहुः—अस्मत्त इति ।

९५. सौन्दर्याभावं स्वीकुर्मः—सौन्दर्यादिति । चातुर्याद्यनवस्थितेस्तु 'चातुर्यमपि नास्ती'ति ।

पृ० ३०९. ९८. 'याताऽबला व्रज सिद्धा मयेमा रंस्यथ क्षपाः ।
यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥'
इति कात्यायनीव्रतकृतां प्रतिज्ञां स्मारयति–अविधीति ।

१०४. तथापि कुलपरम्परागतं धर्ममनादृत्य कथं यूयं स्वीकार्याः ?—पुत्र इति ।

पृ० ३१२. १२१. काचित् कामिनी प्राह—का त्वमिति । तव कृष्णस्य । कामं यथेच्छम् ।

पृ० ३१३. १२८. अस्मत्स्वीकारो योग्य इत्याहुः—त्वं गोकुलाधिपेति ।

पृ० ३१४. १२९. पूर्वोक्तं विस्मृतं किम् ?––युष्मद्दास इति ।

१३१. स्तैन्य-लीलाप्रसङ्गे कृतां प्रतिज्ञां स्मारयति––धृत्वा मौनमिति । गुर्वग्रे यशोदा-नन्दादीनामग्रे । तत् तर्हि ।

१३३. किं कुर्मो वयम् ?––वक्तव्यमिति ।

पृ० ३१५. १३८. तूष्णींभूतं विस्मयन्तं सद्भावेनाहुः—न विद्म इति। तर्हि किं जानीथ ?—सदयेति।

१३९. सदयं किं करोमीति वदन्तं प्रत्याहुः—आकारित इति।

१४१. किमपि धर्माधर्मं जानीथ ? नेत्याहुः—न धर्ममिति।

१४३. अलभ्यसुखदातुः कोऽभिप्रायः ?—मत्पादेति। मत्पादभक्त्यतिशयोपचयार्थं मत्पादभक्तेः अतिशयोपचयार्थम् अत्यन्तवृद्ध्यर्थम्।

पृ० ३१६. १४४. कुत एवम् ? तत्र ग्रन्थकारः प्राह—न धर्म इति। अविधेयजः अकार्यजः। कथं तर्हि धर्माधर्मनिर्णयः ?—किन्तु ताविति।

किमसूचयत् ?—( तासामिति : १०.२९.४८ )

१४८. अन्तर्धाने कारणम्—अस्याऽहङ्कृतिरिति। भास्वरः प्रकाशमानः। एवं किमर्थम् ? साधूनामिति।

पृ० ३१७. १५१. तात्पर्यं प्रकटयति ग्रन्थकारः—नीत इति। 'या निशे'ति मायारात्रिविहारिणा। अत्र संसारे॥ २९॥

## त्रिंशोऽध्यायः

पृ० ३१८. १. मङ्गलमाचरति ग्रन्थकारः—सर्वात्मकोऽपीति। भ्रमकाले प्रातिभासिकसर्परूपाऽपि ( सर्पात्मिकाऽपि ) प्रातिभासिकसर्पाद् भिन्ना रज्जुर्यथा, तद्वदित्यर्थः।

४. ततोऽधिको गोपीनां तापोऽभवदित्याह ग्रन्थकारः—तदेति।

६. यद्वा ग्रन्थकारः प्राह—अन्तर्हितेति। अपीति योज्यम्। यद्धीः, यस्मिन् कृष्णे यस्य कृष्णस्य वा धीः बुद्धिः।

७. कुतस्तदात्मान इत्याह ग्रन्थकारः—विरहजेति।

पृ० ३१९. ९. तासां कुत एवं तदाध्यासः इत्यत्राह ग्रन्थकारः—एक एवेति। तदध्यासः प्रभोः आरोपः।

११. कुतोऽश्वत्थं पृच्छन्ति ?—यदश्वत्थेति। 'ऊर्ध्वमूलमधःशाखमि'ति। वदन्ति। तत् तस्मात्।

१४. कुतोऽशोकं पृच्छन्ति ?—अस्मदिति।

'सनूपुर-रवेण स्त्रीचरणेनाऽभिताडनम्।
दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत्॥'

इति कादम्बरीटीकायाम्। अशोकपदम्–अशोकस्य शोकरहितस्य वृक्षविशेषस्य च पदं स्वरूपम्। कृष्णकथया कृष्णवार्तया। लघु शीघ्रम्।

पृ० ३२०. १५. कुतो नागवृक्षं पृच्छन्ति ?——नाग इति । तत् तर्हि ।

१८. कुतो तुलसीं पृच्छन्ति ?——अतुलेति । प्रसभनम्रमुखी बलात्कारेण नम्रमुखी ।

पृ० ३२१. २५. युगपत् पृष्टत्वात् अन्तरं न श्रूयते, अतः एकैकशः प्रष्टव्यः । तत्राऽऽम्रं पृच्छन्ति——रसालेति । 'अथवा सत्यं गोपिकानन्दकोऽसी'ति योज्यम् ।

पृ० ३२२. २९. बिल्वं प्रत्याहुः——भोः श्रीबिल्वेति । तल्लिप्सया रतिप्राप्तीच्छया । 'नः (अस्माकं) अव्याहृतभव्यसेव्यभगवद्रत्यर्पणं सन्ततं कुशलैः सेव्ये भगवति रत्यर्पणं कुरु' इति योज्यम् ।

३३. पुनः कदम्बं पृच्छन्ति——सत्याश्रय इति । तत् तस्मात् तद्धियैव भुजङ्गवशीकरणार्थमित्यर्थः ।

३४. बदरीं प्रार्थयन्ति——यदेति । स्फुटं निश्चितमस्ति ।

३९. शाखारहितं वृक्षं विलोक्य परस्परमूचुः——स्थाणुरिति ।

पृ० ३२४. ४४. कपित्थं प्रत्यूचुः——रे रे कपित्थेति । निजमन्मथसंज्ञया, 'कपित्थग्राहिमन्मथाः' इत्यमरः । नैतेन स्तुतियोग्यस्त्वम्, तर्हि किं कुर्याम् इति चेत् कृष्णं प्रदर्शयेत्याहुः——यः सर्वदेति ।

पृ० ३२६. ५४. दाडिमीं पृच्छन्ति——यदा यदेति । ततः प्रेम्णा श्रीकृष्णकर्तृकफलस्मरणात्, त्वयाऽपि प्रेम्णा वीक्षितः स्यात् ।

पृ० ३२८. ६९. किंशुकमाहुः——शुक इति । भावुकान् रसविशेषभावनाचतुरान् । प्रतारयति प्रकर्षेण तारयति । प्रतारयसि किम् ? अपि तु न, किन्तु प्रतारणां करोषि ।

पृ० ३२९. ७६. परस्परं शोचन्त्यः साश्चर्यमाहुः——कुत्रास्त इति । तं कृष्णम् ।

पृ० ३३२. ९६. कमलमाह काचित्——स्रष्टेति । एतदीये भाले गोपीनां भाले । ततः हेतोः ।

९८. फुल्लां कुमुदिनीमाह——अत्यनभिज्ञ इति । तव तु लज्जैव युक्तेत्याह——मत्पतीति ।

पृ० ३३४. ११२. भ्रमरमाह——रे रे द्विरेफेति । अधिगतः प्राप्तः । पङ्किनीः पद्मिनीः प्रति ।

पृ० ३३५. ११४. कमलासक्तं भ्रमरमाह——मा त्वमिति । अनेन मद्यपायिनां पतिव्रताच्छलकृतां च स्थितिः पङ्किला भवतीति सूचितम् ।

पृ० ३३६. १२४. केचित् कथयन्तीति प्रतिकूलं विधिं मत्वा विधिशब्दवाच्यं ब्रह्माणं भर्त्सयन्त्य आहुः—स्रष्टा एवेति । ईदृक् प्रतिकूलः त्वत्सदृशः कश्चिदस्ति ?

१२६. ब्रह्माणमन्याऽऽह—यो विद्धेति । 'पितामह' इति आजन्म-वृद्धपदभाक् ।

पृ० ३३७. १३०. अतः सैव वक्तव्येति मुरलीमाह—मुरलीति ।

पृ० ३३८. १४०. चन्द्रमाहुः—नित्यमिति । किं तत् ? तदाहुः—दातुमिति ।

पृ० ३३९. १४३. पुनस्तं प्रार्थयन्ति—भवानिति । तत् तस्मात्, विधेये कर्तव्ये सति । काचित् चन्द्रं रावणत्वेन वर्णयति—

'रात्रिचरः किल राजा बहुकरयुक् त्वं सुधायुतो यस्मात् ।
सकलाऽऽस्यातिसुभयदो विरहिण्या रावणोऽस्ययें चन्द्र ॥'

( गो० कृ० चं० )

सकलास्यातिसुभयदः—कलाभिः सहिता सकला सा चासौ आस्या स्थितिस्तया कलापरिपूर्णस्थित्या, अति-सुभयदः, 'आस्यं मुखे च तन्मध्ये तद्भवे च स्त्रियां स्थितौ' इति मेदिनी । पक्षे विरहिण्याः सीतायाः सकलैः दशभिरपि आस्यैः मुखैः अतिसुभयदोऽसि, तस्माद्धेतोः रावणोऽसि विरहोद्दीपकत्वेन विरहिण्या रोदयिताऽसि ।

चन्द्रं वर्णयति काचित्—

'अये त्वष्टानाथ श्लथय न धृतिं नः कथय सः
क्व यातो गोपीनां प्रभुरुदरवर्तित्रिभुवनः ।
सदा यो गोप्यात्माऽहमिति वनितानां सुहृदभू-
दिदानीं तच्छब्दच्छलमजनि यस्य स्फुटमिव ॥'

( गो० ली० का० )

मदनं वर्णयति काचित्—

स्मर खरतरगरधरवरशरसन्दोहैः प्रपीडनं कुरु मा ।
नो चेत् तव जनकस्य स्याद् विरहाग्नेरतीव भोः पीडा ॥'

( गो० कृ० चं० )

खरतरगरधरवरशरसन्दोहैः तीक्ष्णतरविषधरसदृशाः ये वरशराः तेषां सन्दोहैः, तव जनकस्य त्वत्पितुः मनसः अर्थात् अस्मदीयस्य विरहाग्नेः श्रीकृष्णविरहरूप-स्याग्नेः सम्बन्धिनी पीडा स्यात् । यद्वा—जनकस्य

श्रीकृष्णस्यैव अस्मद्विरहाग्नेः पीडा स्यात्। 'तव जनकस्ये'त्युक्त्या स्वपितुरनिष्टकारित्वेन तवाऽपकीर्तिर्भविष्यति। किञ्च पितृत्वात् निरपराधस्वीयवधकारिणस्तव शासनमपि स करिष्यतीति च ध्वन्यते।

पृ० ३४०. १५२. अन्या पृच्छति—राज्ञ इति। 'चन्द्र एवं मन्यसे, तर्हि शृणु; नहि भवान् राजाऽस्ति, तर्हि को राजा? राजा परः' इत्यादि योज्यम्। श्रीराजराजस्तुतः कुबेरस्तुतः।

पृ० ३४१. १६२. मुकुलितं कमलं दृष्ट्वा वितर्कयति—दृष्टेति। असौ कमला, वन्धौ चन्द्रे।

पृ० ३४३. १७१. भूमिं पृच्छन्ति—सकृदपीति। 'यतः तपसः ते त्वया (भूम्या) कृष्णपदं लब्धमासीदि'ति योज्यम्।

१७५. दशा कामं वर्धयन्तो मृगान् पृच्छन्ति—रे शम्बरा इति। निस्त्रपतापदानि निर्लज्जतास्थानानि। श्रीकृष्णं पृच्छन्ति—

'विचार्यतामच्युत! कोऽत्र दोषः
स्मयोऽपि नः सात्त्विक एव नान्यः।
त्वदाश्रितं यत् खलु सात्त्विकं त-
दितोऽन्यदुद्भिन्न - रजस्तमस्कम्॥'

ननु कुतो वो गर्वः? तत्राहुः कथं न भवेद् गर्व इति—

'क्व वल्लवानां वनिता विमुग्धाः
क्व साक्षिचिन्मोदमय - स्त्वमीशः।
अतः कथं नाऽऽप्य भवेद् भवन्त-
मनन्तगर्वो गगनस्पृशां नः॥'

(गो० ली० का०)

पृ० ३४४. १७७. प्रथमं वृक्षं पश्चाच्च लतां प्रष्टुं परस्परं वदन्ति—अयमिति।

१७८. वृक्षानाहुः—परोपकारायेति। युष्मद्यशः इति श्रुतम्—

'पत्र-पुष्प- फल-च्छाया -मूल-वल्कल- दारुभिः।
धन्या महीरुहा येभ्यो निराशा यान्ति नार्थिनः॥' इति।
'छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे।
फलन्ति वै परार्थे च नाऽऽत्मनोऽर्थे महाद्रुमाः॥'इति च।
ईदृक् प्रकथनरूपम्।

पृ० ३४४. १८०. कुतस्तदात्मिका जाताः ? इत्यत्राह ग्रन्थकारः—इत्थमिति । द्वे भेदाभेदोपासने ।

पृ० ३४५. १८७. काचिदाह—दध्न इति । अम्बुजातेन करकमलेन ।

१८९. वासनायाः प्राबल्यमाह ग्रन्थकारः--प्राग्वासनेति । आत्मवादाः वेदान्तवचनानि ।

पृ० ३४६. १९६. अन्याऽऽह—लतैकरसिक इति । यत् यतः । यत्स्थितिः यस्याः लतायाः स्थितिः ।

१९७. अन्या आश्चर्येण आह--लावण्यमेवेति । यद्वीक्षणं यद्दर्शनम् । यतः कृष्णात् ।

पृ० ३४७. २०४. ग्रन्थकारः प्राह--सदागमेति । यावद्वस्तुध्याताच्युतात्मनाम् यावद्वस्तुषु सम्पूर्णवस्तुषु ध्यातः अच्युतः आत्मना यैस्तेषाम् । अस्मिन् संसारे ।

२०५. अयं किं सन्मार्गः ? तत्राह ग्रन्थकारः--सन्मार्ग इति । यत्र मार्गे । तं मार्गम् ।

पृ० ३४८. २०७. गोप्यः साश्चर्यमाहुः--सख्य इति । 'पश्यत पश्यते'ति सम्भ्रमेण द्विरुक्तिः । 'कुत्रचित् आकाशसरोजमि'त्यपि सत्यं वचः 'अलीकमि'ति कथं वर्णितमिति योज्यम् ।

२०९. मार्गणचरितेन किमसूचयत् ग्रन्थकारः—योऽन्तर्बहिरिति । विष्वक् सर्वतः भवे संसारे । मायाविलासविशदीकृतनैजवृत्तेः मायया सह मायायाः वा विलासैः विशदीकृता नैजा स्वकीया वृत्तिः येन तस्य मायेशितुः ।

२११. काचित् कलिलोकधर्मान् दर्शयन्ती 'तस्याः' पददर्शनमसहन्ती प्राह—न स्नेह इति ।

पृ० ३४९. २१२. नीतिविरुद्धाचरणमित्याह काचित्—यन्न इति । सः कृष्णः । नयानुगं नीत्यनुसारि ।

२१३. सत्यमिति काचिदाह—आराधनमिति । तन्निर्मितः तया निर्मितः । अयफलं शुभावहफलम् ।

२१५. कृष्णस्यैवायं दोषः कुतो न ? इत्यन्याऽऽह—समानास्विति । तस्य कृष्णस्यैव । रहस्थविरहस्थता एकया रहसि स्थातव्यम्, अन्याभिः विरहे सति ।

२१६. पदरेणून् स्तुवन्ति--गोविन्दादपीति । तद्वत् कृष्णवत् ।

पृ० ३४९. २१७. तत्त्वमाह ग्रन्थकारः—सत्सङ्गोऽपीति । तासु गोपीषु ।

२१८. तां कुतो निनिन्दुरिति ग्रन्थकारः प्राह—त्यक्त्वेति । साध्वग्रगः श्रेष्ठः साधुः ।

पृ० ३५०. २२१. काचित् मात्सर्यं त्यक्त्वाऽऽह—धन्येयमिति । कुतोऽस्यामेव अनुरागः ?—यद्वेति ।

२२२. प्रभोः सदयतां तस्यादोपं च पुनर्मात्सर्येणाऽऽह—अम्बिति ।

२२३. आस्तां तत्, धन्यतामाह काचित्—यस्मिन्निति । अस्याः गोपिकायाः ।

२२४. काचिदसहन्ती आह—यस्येति ।

२२५. निराशाः प्रत्याह—यत्किञ्चिदिति । सुकृतं प्राक्तनम् । एतत् प्रभुपदमार्गणरूपम् ।

पृ० ३५१. २२६. अनेन किं सूचितमिति ग्रन्थकारः प्राह—दीन इति । स्त्रीवशगः पुमान् यथा पराधीनाचारो दीनश्च भवति, तथा प्रदर्शयन् सूचयन् राधेच्छया सर्वास्त्यक्त्वा तामेवैकामभजत् ।

२२७. स्वचरित्रेण साऽपि स्त्रीणां स्वभावमदर्शयदित्याह ग्रन्थकारः—न सौकुमार्यमिति । अगूढं स्पष्टम् ।

२३०. कृष्णकृतं समर्थयति ग्रन्थकारः—एवमिति । 'एवम्' इत्यत्र 'एकमि'ति पाठभेदः ।

'ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत् ।<br>
न पारयेऽहं चलितुं नय मां यत्र ते मनः ॥'

( भाग० १०.३०.३७ )

वनोद्देशं वनमध्यगतं गत्वा दृप्ता निःसाध्वसा ( केशवम् ) अब्रवीत्—अहं चलितुं न पारये । अयमाशयः—यद्यहं न चलामि, तदा अयमपि न चलिष्यति । तावतापि सर्वा मिलिष्यन्तीति साधूक्तम्—'न पारये' इति । न पारयति चेत्, तदा किं कर्तव्यम् ?—नय मामिति । मां नय, क्व नेष्ये ?—यत्र ते मनः—मनस्तु तव विरहितास्वेव तासु, मयि तु श्रीविग्रह एवेति वक्रोक्तिः । भगवानपि तदभिप्रायं विदित्वाऽपि विपरीतबोधमभिनीय यदकरोत् तदाह—एवमुक्त इत्यादि ( १०. ३०. ३८ )। तत इति ।

सप्तम्यां तसिल् । यद्वा—केशवमपि प्रेमपराधीनतया केशान् तदीयान् पुष्पादिना ग्रथयति, तादृशं दृष्ट्वा स्वाधीनदृष्ट्या अब्रवीत्—न पारयेऽहमिति । अहं चलितुं न समर्था । ननु महत्-सुखप्रदो रम्यतमः केलिप्रदेशोऽग्रे वर्तते, तत्राऽवश्यं गन्तव्यम्; तत्राऽऽह—'नय मां यत्र ते मनः ।' मनस्तु सर्वासु गोपीष्वेव, तत्र नयेति भावः ।

पृ० ३५२. २३३. किं वदन्ती अन्वतप्यत ?—श्रीकृष्णेति । वन्दारुरक्षा-गुरो ! अभिवादकरक्षोपदेशक ।

२३५. 'स्कन्धावासं कथमैच्छम् ?' इति पश्चात्तपति—शुद्धत्वमिति।

पृ० ३५३. २४२. विवशाऽऽह—शचीशवदिति । गोरूपिण्यां मयीति शेषः ।

२४४. शब्दभ्रान्त्या मृगसमीपं गतेत्याह—सन्मार्ग एवेति । सन्मार्गे सत्पथे मृगसमूहे च । अगाढगात्राऽपि शिथि-लाङ्गापि ।

२४६. ग्रन्थकारः तस्याश्चरितात् सूचितमर्थमाह—सुखं वेति । तदेति । सुखावसरे गर्वः कृतश्चेद् दुःखावसरेऽपि हास्याय भवतीत्यत्र उभयम् उभयत्र, मानं प्रमाणम् । तदबला सा चासौ अबला च ।

पृ० ३५४. २४७. तद्भजनेन सूचितमर्थमाह ग्रन्थकारः—अनन्यभावेनेति ।

२४९. विस्मयजनकं किमवदत् सा ?—स्वांसमिति ।

२५१. 'विस्मयं परमं ययुः' इति कुतः ?—प्राय इति । ता विस्मयाः वहिर्गतगर्वा आसन् । निश्चितार्थाः 'केनापि गर्वो न कार्यः' इति निश्चितार्थाः जाताः । तत् क्षमं योग्यम्, कुतः ? यत् अन्तः परमविस्मयम् अत्यन्तं गर्वराहित्यम् आपुः प्रापुः' इति योज्यम् ।

पृ० ३५५. २५२. पुनर्वृक्षादीन् कुतः पप्रच्छुः ?—तस्या इति । तदु-पेक्षितायाः तेन कृष्णेन उपेक्षितायाः । अवगत्य ज्ञात्वा ।

२५३. वृक्षान् धिक्कुर्वन्त्य आहुः—हे चाम्पेयेति । युष्मासु वृक्षेषु मध्ये । कोऽपि वृक्षः ।

२५५. पलाशं दृष्ट्वा सभयमाहुः—व्रजतेति । अखर्वः महान् । रक्तवक्त्रः किं करिष्यति अयं पलाशः ?

पृ० ३५६. २६०. ततो दूरमागत्य मयूरं पृच्छन्ति—त्वं मेवहृष्ट इति ।

२६५. वृद्धं चन्द्रं दृष्ट्वा अधिक्षिपन्ति—त्वमसीति ।

पृ० ३५७. २६७. चन्द्राङ्कगतं कृष्णं मत्वाऽऽह—रे चन्द्रेति ।

पृ० ३५८. २७६. गोवर्धनं दृष्ट्वाऽऽह—अस्मद्धितीर्णेति ।

पृ० ३५९. २८२. निवृत्तौ कारणमाह ग्रन्थकारः—योग्यागमा अपीति ।

पृ० ३६०. २८५. यद्वा—किं वदन्त्यः आसन् ?—जगदिति । इति हेतोः ।

२८६. किं बोधितमाभिः ? तदाह—अप्राप्येति ।

२८८. स्वहृदि द्रष्टव्य इत्याह कृष्णः—नहीति ।

पृ० ३६१. २९३. के तासामालापाः ?—त्यक्त्वेति । अन्यसाधनानि तपः-स्वाध्याय-संयमादीनि । गायाम इति—

'सेवायां वा कथायां वा यस्याऽऽसक्तिर्दृढा भवेत् ।
यावज्जीवं तस्य नाशो न क्वापीति मतिर्मम ॥'

इति भक्तिवर्धिन्यां वल्लभाचार्यकृतायाम् । 'कथायाम्' भगवल्लीलागायनरूपायाम् । यथाशम् शं मङ्गलमनतिक्रम्येति यथाशम् । यद्वा—आशानुरूपं यथेच्छं च ।

२९५. किं चक्रुः ? इति समाधत्ते ग्रन्थकारः—कृत्वेति । ताः गोप्यः । तद्विशुद्धपुलिने, उपविश्येति शेषः । तत् यशोगानम् । सकलात् साधनात् ।

पृ० ३६२. २९८. यद्वा—गीतेनेति । अस्य कृष्णस्य । अनेन लब्धाः ।

२९९. कुतः समवेता इत्याह ?—प्रत्येकस्मिन्निति ॥ ३० ॥

## एकत्रिंशोऽध्यायः

पृ० ३६३. २. आलक्ष्येति । गुणवृत्तय इति । 'ब्रह्मन् ब्रह्मण्यनिर्देश्ये' ( १०.८७.१ ) इति प्रश्नः ।

'स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥'

( १०.८७.१२ )

इत्यारभ्य 'त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः' ( १०.८७.४१ ) इत्यन्तमुत्तरम् ।

पृ० ३६४. ७. 'नाऽऽश्चर्यं यत् त्वं निगूढ' इति गोप्य आहुः—यत्र त्वमिति। ते तव। तत् तस्मात्।

१०. 'युक्तं कृतमिति चेत्' नेत्याहुः——मानापराधमिति। मानः अभिमानः।

१२. किं बहुनेत्याहुः—अजोत्कर्षार्थमिति।

पृ० ३६५. १५. विश्वासघातित्वं न जानासि किम्?—सन्त्यक्षामीति।

१७. इति पृच्छन्ति—स्वार्युत्पादकेति। कुधीः कंसः।

पृ० ३६७. २६. पुनः पृच्छन्ति द्रोहचिन्तनम्—व्यापादमिति।

२८. 'अस्माकं वधं मा कुरु' इति प्रार्थयन्ति——यो मुष्णातीति। अस्मादेव हेतोः। विशुल्कं मूल्यरहितम्। तत् तस्मात्।

३१. पुनः प्रार्थयन्ति—प्रारब्धादीति। तत् दुःखप्रदं कर्म। पङ्कालेपनेति। 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति हि उक्तिः।

पृ० ३६८. ३४. अस्मद्धरणं नाऽऽश्चर्यंकरमित्याहुः—शरदुदाशयेति।

पृ० ३७०. ४७. का देवप्रार्थना, त्वं किम् आचरसि?—अनाथजनेति।

४९. ननु शीतनाशाय अग्निं सेवते, तत्राऽऽह——नित्याम्भोधीति।

पृ० ३७१. ५२. जनः किं कथयति, तत्राऽऽहुः—अस्मद्व्रतस्त्वमिति। वास्तवाज्ञः वस्तुतो मूर्खः। साप्तपदीनम्, 'सख्यं साप्तपदीनं स्यात्' इत्यमरः।

'न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक्।
विखनसार्थितो विश्वगुप्तये सख उदेयिवान् सात्वतां कुले॥'
(१०.३१.४)

दशधा व्याख्याऽस्य पद्यस्य। एकमेव पद्यं भिन्नाशयेन दश गोप्यः कीर्तयन्ति। यथाश्रुतोऽर्थः श्रुतिरूपाणाम्, अर्थात् श्रुतिरूपमिदं पद्यम्। अतस्तदेव स्व-स्वमत्यनुसारम् इतरा अपि गायन्ति—

(१) न खल्विति। वक्रोक्तौ नखैर्लुनन्तीति नखलवः—कपयः, ते च गावश्च पिकाश्च, तेषां नन्दनः आनन्दवर्धनः।

(२) यद्वा——'विषजलाप्ययात्' (१०.३१.३) इत्यादि यद् वर्णितं तत्राहुः, ननु विषादितो रक्षणे काममशक्तिः, गोपिकानन्दनत्वात्, तत्राहुः—

न खल्विति । भवान् गोपिकानन्दनो न, किन्तु अखिलदेहिनामन्तरात्मदृक् । तर्हि कथं दृश्योऽहम् ? तत्राऽऽहुः—विखनसेति । अर्थितः प्रार्थितः । अत एव यादवानां कुले उदेयिवान्, अतो दृश्यः । तस्मात् तात्पर्यमेतत्—ईश्वरस्त्वं यथा विषादितो रक्षितवांस्तथाऽधुना विरहतापाद् रक्षेति ।

( ३ ) यद्वा—भवान् गोपिका एव केवलं नन्दयतीति तथा न, किन्तु अखिलदेहिनाम् अन्तरात्मदृक्—सर्वान्तरसाक्षी । अतः अस्मदादीनां दुःखद्रष्टेति भावः । तात्पर्यन्तु—'अतो विरहदुःखं दृष्ट्वाऽपि उपेक्षसे, नेदं समुचितं दयालोः साक्षिणस्तवे'ति ।

( ४ ) यद्वा—अन्तरात्मेति । अन्तरेषु परच्छिद्रेषु आत्मा मनो यस्य स चाऽक्षी दृक् द्रष्टा च । अत एव ब्रह्मणा विश्वगुप्तये अर्थितोऽपि सात्वतां यादवानामेव कुले उदेयिवान् । अतो यादवानामेव रक्षिता । नः इतरेषां तु द्रष्टैव केवलम्, यतः एवं गोपिकानन्दनः यशोदानन्दनो नेति तु व्यक्तमेव ।

( ५ ) यद्वा—विदितमस्माभिः, किं तत् ? भवानखिलदेहिनामन्तरात्मदृक् न, किन्तु गोपिकानन्दनः गोपालः, अतो न सर्वसाक्षीति । साक्षित्वाभावादेव अस्मद्दुःखं न जानासि । अत एव विखनसा विश्वगुप्तये अर्थितः प्रार्थनापूर्वकं नियोजितः । 'सर्वसाक्षित्वे सति कथं विधिप्रार्थनापेक्षे'ति भावः ।

( ६ ) यद्वा—विश्वगुप्तये विखनसा नाऽर्थितः, किन्तु स्वयमेव सात्वतां कुले उदेयिवान्, अतो यादवानामेव कुले हर्षकरस्त्वम् । अखिलदेहिनां तु केवलम् अन्तरात्मदृक् साक्षी । अतो न गोपिकाः न नन्दयति भवान् । तथापि गोपिकानन्दनोऽसि, अर्थान्तरेण गवां पिकानाम् आनन्ददोऽसि ।

( ७ ) यद्वा—भवान् गोपिकानन्दनो न । यदि गोपिकानन्दनस्तर्हि स्वज्ञातित्वेन गोपीः आनन्दयसीति भावः । कस्तर्हि अहम् ? तत्राहुः—अखिलदेहिनामन्तरात्मदृक्, सर्वत्र समत्वेन सर्वसाक्षी भवान् । विखनसा—विशेषेण खनति समं ब्रह्म विचिनोतीति विखनाः, तेन समदृशा ब्रह्मणा । विश्वगुप्तये समत्वेन रक्षणाय, अर्थितः । अत एव सात्वतां भक्तानां समदृष्टीनां कुले उदेयिवान् । अतः सर्वान् हित्वा वैषम्यतया केवलं गोपिकानन्दनो नेति विदितम् ।

( ८ ) यद्वा—हे असखे घातक, अखिलदेहिनामन्तरात्मदृक् सर्वेषां द्रष्टा भवान् । विखनसा विशेषेण खनति नाशयति इति तथा, सर्वेषां ललाटे मृत्यु-समयलेखकत्वेन विखनापदस्यैवमर्थो युक्तो भाति, तेन ब्रह्मणा । विश्वस्य गुप्तये नाशाय अर्थितस्त्वम् । सात्वतां यादवानां कुले उदेयिवान् विश्वनाशा-रम्भं कृतवान् । देवकी-वसुदेवयोर्बन्धनात्, यादवानामपि विदेशादिदुःखात् । अतः खलु निश्चयेन गोपिकानन्दनो गोपिकानन्ददाता न । यो यो बकाद्यादि-

स्त्वद्दर्शनाय आगतः, स स त्वया मारित' इति तु प्रत्यक्षमेव अस्माभिर्दृष्टम् । अतो विश्वनाशाय अवतीर्णस्त्वं गोपिकारक्षकः कथं भवसीति खलुपदेन विश्वनाशरूपकार्ये विशेषतः गोपीनाशे आरम्भः कृत एवेति सूचितम् ।

( ९ ) यद्वा—सहर्षं केचित् 'साधूनां विश्वस्य च संरक्षणाय अवतीर्णस्त्वमिति वदन्ति, स मृषावादः' इत्याशयेनाऽऽहुः——भवान् विखनसा विश्वगुप्तये नार्थितः, सात्वतां कुले नोदेयिवान्, किन्तु अखिलदेहिनामन्तरात्मदृगपि गोपिकानन्दनः खलु गोपिकानन्दप्रद एवाऽवतीर्णोऽसि । अतः विषजलादिभ्यः संरक्षितवानसि, साधूनां विश्वस्य च यादवानाम्, अपि तु तदानीं भयादिसत्त्वादिति तात्पर्यार्थः ।

( १० ) यद्वा—सखेदं सशोकं चाऽऽहुः, 'अस्माकमेव सर्वथा दैवं प्रतिकूलम्, तत्र त्वया किं कार्यम्' इत्याशयेन सदुःखमाहुः——भवांस्तु अखिलदेहिनामन्तरात्मदृगेव वर्तते । परन्तु अस्मद्दैवप्रातिकूल्यात् त्वमदृश्यो जातः । किञ्च विशेषेण खनतीति विखनो भूदारः, नसः नासिकाया यस्य स विखनास्तेन । 'पद्दन्नि'ति नासिकाया नस् । ब्रह्मणा विश्वगुप्तये जगद्रक्षणायार्थितः, न हि केवलमस्मद्गुप्तये एवार्थितः, अस्मद्दैवप्रतिकूल्यादिति भावः । अत एव यादवकुले उदेयिवान् । 'यद्यस्मद्दैवमनुकूलमभविष्यत्, तर्हि अस्मत्कुले नाऽभविष्यः किम् ?' अतो 'न खलु गोपिकानन्दनो भवान्' गोपिकानन्ददो नासीति न तव दोषः, किन्तु अस्मद्दैवदोषोऽयम् । धिगस्मद्दैवम्, ! तथाऽपि हे सखे स्वकारुण्याद् दृश्यो भव' इत्युक्त्वा विह्वला बभूवुरित्यलं पल्लवितेन ।

पृ० ३७१. ५३. 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥'
इति तदुक्तिं स्मरन्त्यः पृच्छन्ति——क्वचित् पत्रमिति ।

५४. पुनः पृच्छन्ति——किं वेति । 'अदम्भशालिहृदयै'रि'त्यनन्तरं 'सद्भिरि'ति शेषः । 'पृष्टे' इत्यनन्तरं 'सती'ति शेषः । आन्तरगतम् अपराधम् ।

५७. किं वदसि ? तत्र वयमधिकं न जानीम इत्याहुः——वयमिति ।

पृ० ३७२. ५९. यदुक्तम्, इदमपि वक्तुं न युज्यते, यतः—इदमस्मद्वच इति ।
६०. किमर्थं शिरसि करः स्थापनीयः ? तत्राऽऽहुः—भवामयेति ।
उभयदानदक्षं भोग-मोक्षदानदक्षम् ।

६३. यद्वा, किं वदसि ? तत्राहुः—यदि स्यादिति । तत् करकमलम् ।

६४. यद्वा कुतः स्थापनीयः ? तत्राहुः—मीनस्येवेति ।

पृ० ३७३. ६७. अस्माभिरिति । विरहव्रतोद्यापने किं न्यूनम् ?—तदर्थमिति । द्राक् झटिति । तत् तस्मात् । ब्राह्मणाय दक्षिणा का ?—तस्मा इति ।

७१. स्वमुखं दर्शयेति प्रार्थयन्ति—दास्यो वयमिति । तर्हि वेतनं ब्रूतेति पृष्टे प्राहुः—वेतनमिति ।

७२. प्रार्थयन्ति—वृन्दावनमिति । तर्हि किम् ?—तत्त्वमिति । स्वकाननम् स्वकं च तदाननं च, स्वस्य काननं च । त्वं तद्वनं दर्शय, वयं तु स्वकस्य तव आननमेव पश्यामः ।

७३. किं वदसि ? तत्राऽऽहुः—आभिः साकमिति । न वयं योद्धुमागताः, किन्तु त्वद्दास्यः । योद्धा तु त्वदभिमुखः कामः इत्याहुः—अनिशमित्यादिना ।

पृ० ३७४. ७५. एवं चेत्, कथं युष्मत्प्राप्तिः ? तत्रोपायमाहुः—यदाश्रित्येति ।

पृ० ३७५. ८३. स्मरात् तव बलमधिकमित्याहुः—स्मर इति । श्रुतिस्थितपदः—कथाश्रुतिमात्रेणैव स्थितं भक्तहृदि पदं स्वरूपं यस्य । यद्वा, स्वनामश्रुतिमात्रेणैव भक्तहृदि स्थितं पदं स्वरूपं यस्य 'आहूत इव मे शीघ्रं दर्शनं याति चेतसि' इति नारदः । यद्वा, श्रुतिषु वेदेषु स्थितं पदं ज्ञानं रूपं वा यस्य, 'पद गतौ' । 'गत्यर्था एव ज्ञानार्थाः' । तत् तस्मात् । तव पराभवो न भवेदिति सम्बन्धः । कुतः ?—स्मृतेरिति । मानं प्रमाणम् ।

८४. स्मराद् भयं सम्भावयन्त्यः साश्चर्यमाहुः—अयि भोरिति । वैरी वृकादिः ।

८६. कामजयस्तव सुकर इत्याहुः—वीरं स्मरमिति । 'अस्य जये यत्नोऽपि कार्यो न भवेदि'ति योजनीयम् ।

पृ० ३७६. ८९. यावत् कामवशा न वयं तावत् पालय इत्याहुः—रक्षोराजेति । इति हेतोः ।

पृ० ३७७. ९४. किं वदसि ? तत्राऽऽहुः—पापादिति । ईदृशम् एवम् । ताः प्रणतीः । तत् तस्मात् ।

९५. पृच्छन्ति—त्वत्पदध्यानेति । हृद्ग्रन्थिः अहङ्कारः ।

पृ० ३७८. १०४. साश्चर्यमाहुः—या महामोहेति । 'एवं सति' इति शेषः ।

पृ० ३७९. १०८. प्रार्थयन्ति—कथामृतमिति । तेन जातं किम् ?—अनङ्ग इति । तत् तस्मात् ।

१०९. पृच्छन्ति—शब्द इति । हे भगवन् ! तव कीर्तिरूपः शब्दोऽपि अनपेतसुखं रसत्वं रसभावं समेत्य प्राप्य श्रोतॄन् सरसान् करोति यदि, तर्हि हे ईश ! साक्षात् सरसोऽपि त्वं रसप्रदाने अलसो जातः । तदेतत् किमुचितम् ? उचितमेवेति वक्तव्यं भवेत् । कुतः ? यतः आढ्ये प्रायः कृपणत्वमेव दृश्यते ।

'शूरं त्यजामि वैधव्यात् उदारं लज्जया पुनः ।
सापत्न्यात् पण्डितमपि तस्मात् कृपणमाश्रये ।।'

११३. बुद्धमित्याहुः—चन्द्रादपीति । तव यशः चन्द्रापेक्षया शीतलं पापहरं च । अतो व्यासादयस्तत् सादरं गायन्ति । तव ईदृक् आचारस्तु अवलास्वपि एवं प्रतिभाति, तर्हि कुतस्ते तथा वर्णयन्ति ? यतस्तेषाम् अकल्प्यम् अनल्पमिष्टमिह । तस्मात् तथा ते अवर्णयन्निति भाति ।

पृ० ३८०. ११५. पृच्छन्ति—ये त्वत्कथेति । भजन्ति सेवन्ते । प्रथा ख्यातिः । बतेति खेदे ।

११७. साश्चर्यं सखेदं चाऽऽहुः—तत्त इति । तत् अनिर्वचनीयम् । तत् मननमेव ।

११८. शपथं कारयन्त्यः पृच्छन्ति— सङ्केतमिति । सङ्केते स्वभाषावन्नं वितथं व्यर्थम्, विधाय कृत्वा ।

११९. वयमेव मूर्खा इत्याहुः—स्वप्रेयःसुतेति ।

पृ० ३८१. १२०. क्षमापयन्ति—अस्मद्दुःखेति । मुग्धाभिः अज्ञाभिः अणुरपि ते मन्तुर्न, किं तर्हि ?—रह इति ।

पृ० ३८२. १२९. प्रार्थयन्ति—सदा सन्निहित इति । संविदः भक्तभावाः ।

१३०. पुनः पृच्छन्ति—या गाव इति । यत्समुपागताः याः समुपागताः प्रति ।

१३१. त्वद्भ्रमणे न वयं क्लिश्याम इत्याह—नलिनाधिकेति । मञ्जु कोमलम् ।

पृ० ३८३. १३४. सखेदं साश्चर्यं चाह—आवयोरिति । ईदृशे सुन्दरस्थाने । एतत् एतस्मात् । अनु पश्चात् द्वयं सङ्गतम् । किं तत् ?— त्वत्पदाब्जमिति । जातमिति सम्बन्धः ।

१३६. भावि श्रावयन्ति तदा—विदर्भेति । परं तु यदि-सदर्भेति ।

१३९. तृणादीनां भाग्यं प्रवलयन्ति—त्वत्प्राणप्रियेति । यत्र चरणे । अक्षुण्णां स्थिराम् । दिष्टे भाग्ये । इष्टतमे सति ।

पृ० ३८४. १४२. मनःक्षोभे कारणम्—कलाधिपतिनेति । पितृखेदकृत्— 'चन्द्रमा मनसो जातः' इति श्रुतेः मनसः पिता चन्द्रमाः ।

१४४. यद्वा—पदं नलिनेति । अमतु, युष्माकं किं मतम् ?— गतं यदपीति । अनुचितमसमञ्जसमिति मत्वा तथापि खलु खिद्यते ।

१४६. तृणार्दितमिति । मुधा खेदम् उपैति तद्युक्तम्, यतः— परार्तीति । दयार्द्रधीः खेदमुपैतीति अगूढं स्पष्टम् ।

पृ० ३८६. १५८. साश्चर्यमुक्तिः—निष्किञ्चना अपीति । सोढुं नालं न समर्थाः ।

१५९. यद्वा—कण्टकग्रस्तमिति । यत् यतः दर्शनं देहि, तेनैव सुखिन्यो भवामः, तत्खेदं च अपनयाम इति भावः ।

पृ० ३८७. १६०. किं वदसि ? तत्राऽऽहुः—महानिति । मनोजनिः कामः । 'प्रभो कुतः स इति वदसि चेत्, किमयमस्माकं दोषः' इति योज्यम् ।

पृ० ३८९. १७७. विरहदूरीकरणं प्रार्थयन्ति—पुत्रार्पणमिति । लघु शीघ्रम् । तद्वियोगः कामवियोगः ।

पृ० ३९०. १८४. पृच्छन्ति—लोकहियेति । तत् प्राथितम् ।

१८५. प्रार्थयन्ति—आगत्य पादमिति । तेन प्रथेति ।

पृ० ३९१. १८६. किं वदसि ?—विरागिणीति । अन्तरे हृदि । 'वयं तु रागिणीति परं सुनथ्यं ततः परं मनुमहे' इति योज्यम् । सुरमुनेः नारदस्य । पुरेति—

> 'नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
> मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥'

इति त्वयैव त्वद्यशोगायके स्थितिरुक्ताऽस्ति, किं वदसि ? 'विरागिणी'ति ।

१८७. एवं चेत् अन्तरेव पदचिन्तनं कुरुत, तत्राऽऽहुः— सन्त इति । सद्वदन्त हे सद्वृत्त, एवमेव सत्यम् । 'परन्तु भगवन् ! अधिकारशून्या वयमि'ति योज्यम् ।

पृ० ३९३. १९९. अस्माकं रोगनिवृत्तिस्तव न दुःशकेत्याहुः–यदीति। एतद् ध्रुवं चेत्, हृदामयहृतिः हृद्रोगनिवृत्तिः।

२०३. रोगशान्तये यमुनामृतं पिबत, तत्राहुः—किं तेनेति। अधरं निकृष्टम्।

पृ० ३९४. २१०. 'तवाऽनुग्रहः सतां सुलभः' इत्ययमपि नियमो नास्तीति मुरलीमसहन्त्यः प्राहुः–कृपावनेति। वितथ र्थकः मिथ्यार्थकः।

पृ० ३९५. २१२. मुरलीसङ्ग्रहं निन्दन्ति—सदीञ्चेति। स्त्रिया सहेति शेषः।

२१५. मुरलीं भीषयन्त्य आहुः—अङ्गीकृत्येति। 'एष पन्थाः गृहान्निर्गमनरूपः। त्यज्यताम्। 'एतत् 'नाऽऽसामेव दोषः, किन्तु मुरल्याः' इति आप्तैः परिज्ञातमिति योज्यम्।

२१६. मुरली आह—कृष्णेनेति। गोप्य आहुः— एवं निश्चित्येति। वयमपि गोपिकाः। वतेति खेदे।

२१८. कृष्णमाहुः—-भगवन्निति। अतिवेलम् अत्यन्तम्।

पृ० ३९६. २२५. शोचन्त्यः 'समीचीनं कृतमि'त्याहुः—दिवेति। एवं सति त्वया तथाऽस्त्विति ईरितमिति योज्यम्।

पृ० ३९७. २२७. कृष्णः प्राह—-नित्याह्निकमिति। गोप्य आहुः–मा साहसमिति। श्रमकरः क्लेशोऽपि न जातः।

२३०. रतात् पूर्वं वनविहारोऽनुचित इत्याहुः—-कान्तारतेति।

पृ० ३९८. २३७. निर्मायेति। धात्रा ब्रह्मणा। त्वया तु कल्पितं गिर्यादिव्यवधानकृदिति युक्तम्।

रामोक्तिः—-हारो नारोपितः कण्ठे मया विश्लेषभीरुणा।
इदानीमन्तरे जाताः सरित्सागरपर्वताः॥'

पृ० ३९९. २४१. पृच्छन्ति—-सर्वदेति। अभ्यर्हितः सत्कृतः।

२४२. पृच्छन्ति–कौटिल्यमिति। केन कौटिल्येन श्रिया वेति प्रश्नः।

२४३. एक एव किं पश्यसीत्याहुः—-नानागमेति। यत् यस्मात्।

२४५. प्रार्थयन्ति— नाऽश्रावीति। अस्फुट वक्रोक्त्या उक्तम्।

पृ० ४०१. २५४. कथं स्वभाषण विस्मृतम् ?—-अनाथेति। तव पुरस्तु इदानीं वृथैवेति भावः। दोषाकरादिमान्वयजुषः दोषनिधिचन्द्रान्वयसेविनः। यत् यतः।

२५५. निन्दासुखमिच्छसि ?—-अग्राह्यचेनेति।

२५६. साक्षेपमाहुः—कात्यायनीति। पुरः अग्रे।

२५९. मा त्यजाऽस्मान् इत्याहुः—चेतोवृत्तिजुष इति। स्वस्य पुरुषस्य तेन किम् ?—-शिक्षायामिति।

पृ० ४०२. २६३. तापानर्हा इत्याहुः——ताप इति । अलम् अलम्भि अत्यन्तं प्राप्तः । सः तापः । ते त्वया ।

२६४. वयं मुधा वञ्चिता इत्याहुः——नागस्त इति ।

पृ० ४०४. २७४. आश्चर्यान्तरमिदम्——सकृदपीति । तनुरपि अल्पोऽपि । यत् यतः । ते तव ।

२८१. किं वदसि ? तत्राऽऽहुः——न योषाणामिति ।

पृ० ४०५. २८३. प्रार्थयन्ति——दयावन इति । दवानलशिखाकवलः दावाग्नि-शिखाग्रस्तः कथं भूयात् ?

२८७. वंशं स्तुवन्त्यः प्रार्थयन्ति——वंशोऽयमिति । कलितो युक्तः ।

पृ० ४०६. २८९. प्रकारान्तरेण प्रार्थयन्ति——प्रभो इति । यत् यतः ।

२९१. किं वदसि ? तत्राहुः——पुरुदेणेति ।

२९६. न श्रूयते किमित्याहुः——यावदिति । कलौ अज्ञगा वर्णाऽव्यवस्था भवतु न, परन्तु श्रुतिगा वर्णव्यवस्था तु वर्तत एव । एवं स्थितौ कथं वाच्यमिति सम्बन्धः ।

पृ० ४०७. ३००. कुतो युष्मच्चित्तं भ्रमति ? तत्राहुः——यन्मार्दवेति ।

३०३. कुतो युष्मन्मनोव्यथा ? यः शेष इति । शेषे नागे । तद्दाढर्यमिति । तस्य चरणस्य दाढर्यमालोचयन् । भवति यः, तस्य 'तद्धेतुर्ननु गोपिका' इति वचःशल्य प्राप्तं मनो व्यथयतीति भावः । यद्वा—तेषां शेष-कमला-कुच-योगिचित्तानां दाढर्यं कठोरतामालोचयन् मन्द मन्दमुपैति, तस्य चरणस्य यदिह गिर्यादिषु द्रावणम्, अधुना आप्तं प्रातम् 'तद्धेतुर्ननु गोपिका' इति ।

पृ० ४०८. ३१०. स्पष्टमूचुः——यत्त्वामिति । अनच्छचरितात् मलिन-चरित्रात् । अन्तः मनसि । सुधर्माश्रिताः देवाः मुनयश्च नः पदानि अन्तः समभिलषन्ति, अतः कथमधर्मो जातः ? येन सम्भाव्यमानेन अस्मांस्त्यजसि, तस्याऽत्र नामापि नास्तीति भावः ।

पृ० ४०९. ३१५. गोप्य आहुः——त्रपामिति । अस्माभिरिति शेषः । किन्तु अश्रुतिं मा आनयेति भावः ।

३१६. मूर्खाग्रे न गेयम्, किन्तु रसज्ञाग्रे, अतस्त्वदग्रे गीतमित्याहुः—आकोटीति । दत्त्वेति । रसज्ञेभ्यो दत्त्वेति रसज्ञान् रस-विशेषभावनाचतुरान् ।

३१७. न हाव इति । राजमार्गः भगवद्गुणगानात्मको भक्ति-योगरूपः ।

पृ० ४१० ३२१. निरभिमानमाहुः—त्वं ध्यात इति । विरञ्च्यात्मजैः सनकादिभिः ।

३२२. तत्त्वमाहुः—यच्चिन्तनमिति । साङ्गमिति । कस्मिन्नपि कर्मणि यच्चिन्तनादि साङ्गताप दकं तस्येति सम्बन्धः । तस्येति । तस्य चिन्तनकीर्तनादेः लेशोऽपि न ज्ञायत इति इति सम्बन्धः । तर्हि कथं गीतम् ?—स्तव्येति ।

३२३. प्रार्थयन्ति—ज्ञानकर्मेति । इमं जीवं गोपीजनम् ।

पृ० ४११. ३२६. कालत्रयग-लीलावर्णनमस्मिन् गीते इत्याह ग्रन्थकारः—विपेति ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः

पृ० ४१२. ४. अनेनाऽध्यायेन किं बोध्यते ?—शिष्टेति । तत्कार्यम् अहङ्कारकार्यम् । बोधनं ज्ञापनम् । एष द्वात्रिंशोऽध्यायः । अध्यायान्तिमपद्यतः 'न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषाऽपि वः' ( १०.३२.२२ ) इति श्लोकात् ।

६. रोदनेन किं सूचितमित्याह ग्रन्थकारः—आर्त इति । अस्मिन् जगति । एतत्स्पष्टम्, कुतः ?—यदिति । यत् यतः ।

७. कुतो हास्यम् ?—ज्ञेयमिति ।

पृ० ४१३. १०. भक्तियोगिनामेव भगवल्लाभ इत्याह—तेषामिति ।

११. कुतः सानन्दमुत्थानमित्याह ग्रन्थकारः—वस्तुसामान्यमिति ।

१२. सुखादेरवर्णनीयत्वमाह ग्रन्थकारः—प्रादुर्बभूवेति । हार्दभावः प्रेमा ।

१४. करग्रहणे कारणम्—अकुतोभयोऽपीति । दरभाक् भयभाक् । सः कृष्णः । अयमेव करः ।

पृ० ४१४. १६. यद्वा—अतिप्रियतमेति । तत्तुल्यं रमासदृशम् ।

१७. यद्वा—प्रसादेति । एषः कर एव ।

२२. बाहुधारणे कारणम्—रज इति । त्वज्जाः क्षत्रियाः ।

२४. यद्वा—अंसङ्गतमिति । अहारि गृहीतम् । विलोलबाहुः चञ्चलभुजः ।

पृ० ४१५. २६. तत्र कारणमाह—श्रीनाथेति । श्रीनाथाङ्घ्रिसरोजजातो यो रसो गङ्गाप्रवाहस्तं भजत इति । तत् तस्मात् । इति बुद्ध्यैव इति योज्यम् ।

पृ० ४१५. २८. यद्वा--उद्वेजितेति । तादृशं चर्चितम् ।
३०. यद्वा–ताम्बूलं प्रष्टुं तज्जगृहे--सोद्वेगेति। अनुयोक्तुं प्रष्टुम्।
३१. कुचे पादधारणे कारणम्--सन्मानसेति । मे मया ।

पृ० ४१६. ३२. यद्वा--त्रितापेति । अम्बु गाङ्गं जलम् ।

पृ० ४१७. ३९. किमिति घ्नन्ती वैक्षत्--विरहदुःखमिति ।
४०. स्वाधरदंशे कारणम्--सजातीयेति ।
४१. कुतोऽनिमिषदृग्भ्यां हरिमुखाम्बुजवीक्षणम् ?–साक्षोदेति । सुनेत्रालियुगं नेत्ररूपभ्रमरयुगलम् ।

पृ० ४१८. ४७. मनस्तोषार्थं दध्यौ काचित्--विरहदुःखमिति । इति खेदम् । अमुना मनसा । अस्य कृष्णस्य ।
५१. कुतः पुलकाङ्गी--सुमनोज्ञेति । सुमनोज्ञहृदारामे सुन्दरहृदुद्याने । माधवो वसन्तः कृष्णश्च ।
५२. कथं योगीव ?—हार्दासन इति ।
५४. परस्परेण शोभातिशयं सदृष्टान्तमाह ग्रन्थकारः—कृष्णेनेति । नृजन्मा शोभत एवेति भावः ।

पृ० ४१९. ५५. कुतो यमुनातीरागमनम् ?—सरसा इति । तद्युतः ताभिर्युतः ।
५७. किमर्थं कुङ्कुमासनम् ?—अयमिति । अयं कृष्णः ।
६०. उत्तरीयासनकल्पनायां कारणमाह—धन्यमिति ।
६२. अस्मद्वशीकरणं नाश्चर्यमित्याहुर्गोप्यः—लोक इति। ते तव।

पृ० ४२०. ६४. पृच्छन्ति गोप्यः—योगीश्वरेति । अबाह्याम् अन्तरङ्गाम्। ननु ज्ञातवानिति चेत्, तर्हि उपेक्षा विहितेति चित्रम् ।
६७. पुनरपि गोप्य ऊचुः—दौर्भाग्यादिति। ग्रन्थकार उवाच—स्वच्छन्दमिति ।

पृ० ४२१. ७१. क्रमशो गोप्य आहुः—आसीदिति ।
७२. काचिदाह—तत्काल इति । तत्काले विरहसमये । यतः—नो चेदिति ।
७५. राधाऽऽह—यद् देवीभिरिति । ते त्वत्तः ।
७९. काचिदाह—प्रोज्झितेति । तया स्मृत्या एव ।
८०. अन्याऽऽह—उपेन्द्रेति । 'यदा वियोगः' इति योज्यम् । सहस्रशैलोन्नतवीर्यभार इति । अत्र 'अपि' अव्ययं योज्यम् ।

पृ० ४२२. ८४. अन्याऽऽह—को विहायेति । 'कः वदेत्' इति योज्यम् । तत्त्वं यथार्थम् ।

८६. पुनरन्याऽऽह—यावन्नेति । प्रत्यक्षं दर्शनम् । एषाऽहम् ।

८९. काचिदाह—लघुतमालमिति । अमितया, मयेति शेषः ।

पृ० ४२३. ९४. 'किं जातमि'ति पृच्छन्तमाह—चन्द्राधिकेति । कामानल-कीलाप्लुष्टाम्, कामानलकीलया कामाग्निज्वालया प्लुष्टां नष्टाम् ।

९८. काचिदाह–पीयूषदानेति । शीतदीधितेः चन्द्रमसः । तत् तदा ।

पृ० ४२४. ९९. अन्याऽऽह—तवाऽऽस्येति । जलोद्धतगतिः जडानामुद्धतानां च गतिर्यस्मात् ।

पृ० ४२५. १०६. काचिदाह—अयि नाथेति । 'मम हृदयेने'ति योज्यम् ।

पृ० ४२६. ११६. पृच्छन्तमाह अन्या—यज्जङ्घालेति । जङ्घाला अति-वेगवती ।

पृ० ४२७. १२०. काचिदाह—सदैवेति । अवनिभृति पर्वते । 'इति यद-श्रावि, तच्च प्रकटमनुभूतम्' इति योज्यम् । 'तेन यः क्लेश' इति अन्वयः ।

१२२. अन्याऽऽह—प्रासायामिति । 'अतः अमन्त्यां मयी'ति योज्यम् । मनोजन्मना कामेन । कथय ?—वक्तुमिति ।

पृ० ४२८. १२५. अन्याऽऽह—दुःसहेति । 'तथापि केशवे'त्यादि योज्यम् ।

१२९. कुतो वयं सक्ताः ?—वयं श्यामा इति । वयं गज-गामिन्यः । किं विरुद्धम् ?

१३०. किं वदसि ?—नवीनेति ।

पृ० ४२९. १३४. किं वाच्यमित्याहुः—विलोक्येति ।

१३५. लज्जामुत्पादयन्त्य आहुः—हंसस्त्वमिति । तत् तस्मात् । 'परन्तु यतः कृष्णस्वरूपभृत् असि' इति योज्यम् ।

पृ० ४३०. १३९. पुनराहुः—विनोदोऽपीति । कुतः ?—यत इति । किं मया कृतम् ?—त्वयेति ।

पृ० ४३१. १४७. कृष्णः प्राह—मिष्टान्नमिति । अविरतं नित्यम्, यत् यदि, तत् तदा, अन्तरे मध्ये । तत्स्वादार्थं तस्य मधुरस्य स्वादार्थम् ।

१५०. युष्मद्धितार्थंगेय अन्तर्हितमित्याह कृष्णः–उन्माष्टुंमिति । प्रत्युपात्त जा ीथ ।

पृ० ४३२. १५३. राधां प्रति वियोगो नासीदेवेत्याह—योग इति । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति श्रीमद्भगवद्गीतायाम् ।

पृ० ४३४. १६९. वाचा श्लेषोऽत्र द्रष्टव्यः श्लोकत्रये । ननु त्वं विश्वासयोग्य इति नाहं वेद्मीति चेत् तत्राऽऽह राधाम्—विश्वास्यतेति ।

पृ० ४३५. १७१. राधां 'नाहं तापद' इत्याह—न तापकर्त्रीति । एनां मत्प्रतिष्ठाम् ।

१७४. ननु सत्यं कृष्णोऽसि तत्राऽऽह—श्यामेति । श्यामा षोडशवार्षिकी । अन्तर्बहिर्लक्षितकृष्णरूपा अन्तः बहिश्च लक्षितं कृष्णस्य रूपं यस्याः यया वा सा ।

१७९. राधा आह—अलमलमिति । प्रलम्भवाक्यैः वञ्चनावचनैः । कृष्णः प्राह—इतीति । 'हे राधे ! पश्य' इति योज्यम् ।

पृ० ४३६. १७८. राधावचनमुद्धृत्य कृष्णः प्राह—किमर्थमिति ।

पृ० ४३७. १८५. किं वाच्यमेतत् पुर इति गोप्य आहुः—वाचालतेति । कुपितां दृष्ट्वाऽऽह—दासोऽस्मीति ।

१८९. रहस्यमेतावत् । स्पष्टं पृच्छन्ति गोप्यः—निजाङ्घ्रीति । कश्चित् स्वार्थी, कश्चन पित्रादिः, भजतः अनुवर्तमानान्, अन्यान् अभजतः, अस्य कस्याप्यभजकस्य ।

१८८. प्रश्नेन किं सूचितम् ?—शुद्ध इति ।

पृ० ४३८. १८९. कृष्णः प्राह—यः स्वस्मिन्निति । कस्मात् हेतोः, अस्मिन् संसारे, विधेया कार्या । एवंस्थितस्य पूर्णकामस्य । 'ते कुत' इति त एव प्रष्टव्याः । ननु त्वामेव पृच्छामः—एतत् कथमिति । भव्यकृत् स्यात् पूर्णकामस्य भजनं मङ्गलकृत् स्यादित्यर्थः ।

१९०. गोप्य आहुः—तादृगिति । भव्यप्रदः मङ्गलदायकः । किं तत् ?—त्यक्त्वेति ।

१९१. कृष्णः प्राह—नायमिति । एवम् अन्तर्धानम् । कुत एवम् ?—यस्मादिति । रतिदं प्रीतिदम् । अस्मिन् संसारे ।

१९२. गोप्य आहुः—नित्यादिति । 'अस्मादेवे'ति योज्यम् । अयं वियोगरूपः । 'किमपी'ति योज्यम् ।

पृ० ४३८. १९३. कृष्ण उवाच—नैवमिति। अस्मिन् संसारे साङ्गे जाते सति फलमवश्यमेव भवेत्। तर्हि कुत ईदृगनुभावः?—युष्मत्क्लृप्तमिति।

१९४. गोप्य ऊचुः—साङ्गमिति। अनङ्गयुतं विकलं कामयुतं च। सदासवर्गः भृत्यसहितः, स्मरामः—

'सङ्कल्पो विदितः साध्व्यो भवतीनां मदर्चनम्।
मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हति॥
न मय्यावेशितधियां कामः कामाय कल्पते।
भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यते॥'

इति स्मृतिं कुर्मः। 'कामाय' पुनः संसारविषयभोगाय। 'बीजाय नेष्यते' पुनरङ्कुरोत्पादनाय भवन्तीति नाङ्गीक्रियते।

पृ० ४३९. १९५. कृष्णः अङ्गीकरोति—सत्यमिति। 'परन्तु कीदृशी वा अन्तरङ्गव्यवस्था स्यात् इति एषः प्रश्नः अभीप्सितार्थानुरोधात् स्पष्टो भविता इति योज्योऽन्वयः।

१९६. अलमज्ञवद् भाषणेनेत्याहुर्गोप्यः—दृष्टेति। त्वत्प्रधानानि कर्माणि, 'फलाभावात् उदासीनाः सत्यो वयमि'ति योज्यम्। साङ्गानङ्गान्तरङ्गानवगतमतिवत् साङ्गान् अनङ्गान् अन्तरङ्गान् च न अवगच्छति जानाति इत्यनवगता मतिर्यस्य, तद्वत्।

१९७. किं कार्यम्, स्थितिरेव अज्ञसदृशी जाता इत्याह कृष्णः—यूयमिति। अनङ्गः कामः, 'कस्मिन् साङ्गे अनङ्गे वा देयं क्व वा न देयमि'ति योज्यम्।

१९८. गोप्य आहुः—यच्चेति। आरब्धव्रतविकलताहारि आरब्धस्य व्रतस्य विकलताहारि वैकल्यनिवारकम्। अर्वाक् इत्थमुक्तम्—'सिद्धं नित्यादधिकरतिदं काममस्मिन् युवत्यः' इति।

२००. कृष्णस्य दक्षिणाक्षिस्फुरणं दृष्ट्वा गोप्य आहुः—अस्माकमिति।

पृ० ४४०. २०२. यश्चिन्तयतीति। मित्रमित्रपदपूर्णपदः, मित्रस्य सूर्यस्य यन्मित्रपदं मित्रस्वरूपं तस्य पूर्णपदः पूर्णस्थानरूपः, मित्रस्वरूपाश्रयभूत इति यावत्।

पृ० ४४०. २०५. कृष्णः प्राह—जातेति । मदर्थत्यक्ताऽखिलागमजनस्वजनोक्तधर्माः, मदर्थं त्यक्ताः अखिलाः आगमोक्ताः जनोक्ताः स्वजनोक्ताश्च धर्माः याभिस्ताः । मदपरोक्षविधौ मम साक्षात्कारविधाने ।

२०७. अलमिति । युष्मदावृतं युष्माभिः आवृतम् ।

पृ० ४४१. २०९. गोप्यः प्रार्थयन्ति—श्रीमद्रमारमणेति । आमोदसम्भृत् आनन्दपूर्णः ।

२१०. किं प्रार्थनीयम् ? न विभो वयमित्याहुर्गोप्यः—प्रसन्न इति । तत् तस्मात् ।

२१४. कृष्णः प्रसन्नः सन् प्रतिज्ञां करोति—जह्यादिति । शालितया शालते शोभते इति शाली, तस्य भावस्तत्ता, तयेति भावः ।

२१५. विरहाग्निः कृष्णमेघेनामृतवर्षणेन शमित इत्याह—एवमिति । प्रेमानिलाकलितकृष्णघनेन प्रेमपवनप्रापितकृष्णमेघेन । अमृतवर्षणेन जलवृष्ट्या ।

पृ० ४४२. २१७. सारमाह—विस्मृत्येति । अवगाह्य हार्दपुलिनम् प्रेमह्रदे स्नात्वेत्यर्थः ।

२१८. ग्रन्थकारः प्राह—लभ्यस्त्वमिति । 'गोपिकाभिः अव्वा सन्दर्शितः, मया च ग्रन्थकृता वृत इति योज्यम् ।। ३२ ।।

## त्रयस्त्रिंशोऽध्यायः

पृ० ४४३. १. रासलीलानिरूपणाय मङ्गलमाचरति ग्रन्थकारः—साध्विति । साधुवृन्दावनात् भक्तसमूहरक्षणात् उद्भूतो यो रसः परमानन्दरूपः तस्याऽऽस्वादे एव एका मुख्या तृष्णा यस्य, तस्य भावस्तत्ताम् ।

२. अभिमान एव भगवत्प्राप्तिप्रतिवन्धकः, तस्मिन् गलिते रसाप्तिरिति दर्शयन् पूर्वोत्तराध्यायसङ्गतिमाह ग्रन्थकारः—निःशङ्कमिति ।

३. गोपीतापहानिः नाश्चर्यमित्याह ग्रन्थकारः—यद्वाच इति । यद्वाचः यद्विषयिण्यो वाचः ।

४. 'रासे'ति शब्दात् किं बोध्यमित्याह ग्रन्थकारः—सिद्ध इति । अरं लघु ।

पृ० ४४३. ६. 'किं विभाव्य सुखमदात्' इत्याह ग्रन्थकारः—तासामेवमिति । कृत्रिमेतरलसद्भावम् कृत्रिमेतरेण सत्येन लसति, स चासौ भावो भक्तिश्च तम् । कामतो यथेच्छम् ।

७. कृष्णः किमसूचयत् ?—प्रारब्धेति । रासो रसानुभवः । सः रासः ।

पृ० ४४४. ८. प्रथमं परस्परबाहुग्रहणेन किं सूचितम् ?—अनङ्गेति ।

१२. किं व्यक्तमभूदिति ग्रन्थकारः प्राह—दृश्यत इति ।

१३. विमानशब्दस्य श्लेषेणार्थान्तरमाह ग्रन्थकारः—यदङ्घ्रीति । त्रिदशशिरसां देवोत्तमानाम् । कलयति स्पृशति । गोपालवनिताः गोपीजनचयः । विमानाश्रितं विमानो मानराहित्यं तदाश्रितं तदखिलवधूवृन्दं समजनि तद्युक्तमित्यन्वयः ।

१४. देवादयः अतर्क्यं रासोत्सवमेकवारं दृष्ट्वा पुनर्दर्शनस्तुति-रास-प्रवेशादिषु असमर्था अभूवन्नित्याह ग्रन्थकारः कैमुत्येन—के देवा इति । किं तेषां देवादीनां सामर्थ्यमिति भावः । तदीशः इन्द्रः, तदबलाः देवस्त्रियः, तद्योनिजाद्याः गुह्यकादिदेवयोनिषु मुख्याः । यत्र ब्रह्मादयोऽपि मौनभाजस्तत्र देवादयः के इति उत्तरार्धभावः ।

पृ० ४४५. १५. नादमिषेण वाद्यैः किं कृतमित्याह ग्रन्थकारः—रासरम्भ इति । कम्बुः शङ्खः ।

१६. पुष्पवृष्टिकृतामभिप्रायमाह ग्रन्थकारः—आलोक्येति । अमूषां गोपीनाम् । सुमतः सुमैः पुष्पैः ।

१८. ग्रन्थकारः साश्चर्यमाह—सुमानीति । 'एतावदेव न केवलमि'ति योज्यम् ।

२०. महानपि कालस्त्रुटिसमोऽभवदित्यत्र युक्तिमाह ग्रन्थकारः—कल्पसन्तानवर्षाणीति ।

२१. गाने कारणम्—सुरतोत्सवसम्भृतामिति । सम्भृतां पुष्टाम् । यत् यतः । इह लोके ।

पृ० ४४६. २२. कथं जगुः ?—केचिदिति । काश्चित् स्त्रियः ।

२४. वलयादीनां शब्दे कारणम्—निःसीमेति । इति हेतोः । रवतः शब्दतः ।

पृ० ४४७. ३६. कुतो गोपीनां सुवर्णरूपत्वम्—सकलमिति । सकलार्क-चक्षुषा सकलार्कौ चन्द्रसूर्यौ चक्षुषी नेत्रे यस्य तेन । याभि गोपीभिः ।

पृ० ४४८. ३७. किं वर्णनीयं सौभाग्यम् ?—तासामिति । सः कृष्णः । गुणतः गुणम् । यन्नायको यासां नायकः नेता हारमध्य मणिश्च, गोपीइच्छया स्वनिकटस्थितस्य हारमध्यमणित्वं बोध्यम् । अखिलसन्मणीशः समग्रसाधुश्रेष्ठेशः ।

पृ० ४४९. ४४. श्रुतीनां स्थितिमाह—भगवद्विति ।

४५. युक्तो दृष्टान्तः—क्रीडायामिति । अचले स्थिरे ।

४६. गाने कारणम्—मोहित इति । मृगे वाहने ।

४७. गोपीनामहोभाग्यम् ! 'यद्गीतेने'त्याद्युक्तिः युक्तैवेत्याह ग्रन्थकारः—ब्रह्मादीति ।

४८. अमिश्रगाने कारणम्—अयमिति । द्विजेशकुलजः चन्द्र-वंशजः । अहं गोपी । अवेलम् अमर्यादम् ।

५०. कुतः साध्विति अवोचत् कृष्णः ?—एकोद्गीतेति । एकोद्गीतपरोन्नीतस्वरपूर्तिम् एकया यदुद्गीतं तत्परा या उन्नीतस्वरपूर्तिस्तां विभाव्य ज्ञात्वा ।

५१. केनाभिप्रायेण स्कन्धाश्रयणम् ?—आब्रह्मस्तम्बेति । अस्य कृष्णस्य ।

पृ० ४५०. ५२. तद्बाहु कुतो दधार इति कृष्णः प्राह—सर्वांशतोऽपीति । तत् तस्मात् ।

५३. कुतो बाहुचुम्बनम् ? अवयवेष्विति । तत् तदा । रजो-गुणभुजं रजोगुणभोक्तारम् ।

५६. ताम्बूलमिषेण अधरपानं कुत इति युग्मेनाऽऽह—उद्दीप्तेति । उद्दीप्तकीलविरहज्वलनोपशान्तिः प्रका-टितज्वाल-विरहाग्निशान्तिः । असौ राधाऽपि ।

५७. ताम्बूलग्रहणे कारणम्-प्रभुमुख्य इति । आददे जग्राह ।

५८. कुतस्तनयोर्हस्तग्रहणम् ?—पदादिति । अम्बुजातं गङ्गा-रूपम्, अम्बुजातं कमलं जलसमूहो वा ।

पृ० ४५१. ५९. कुतस्तद्रताः ?—विरत्येति । विरत्या वैराग्येण । अध्यक्षं प्रत्यक्षम् ।

पृ० ४५१. ६०. सगद्गदं गोपीनां तदलङ्कारादीनां च भाग्यमभिनन्दति ग्रन्थकारः—भूय इति। अजस्रं नित्यम्। सहस्रस्रवदमरनदीमुख्यतीर्थाञ्चिताङ्गः, सहस्रासु अपरिमितासु स्रवन्तीपु अमरनदीपु देवनदीपु मुख्यं तीर्थं गङ्गा, तेन अञ्चितानि व्याप्तानि अङ्गानि यस्य सः। आसां गोपीनाम्।

६१. 'न कथमवर्णनीयं भाग्यमि'त्याह ग्रन्थकारः—यासामिति। धयति पिवति।

६३. प्रभोरसङ्गितां पूर्णतां चाह ग्रन्थकारः—यादृग् यादृगिति। सः कृष्णः।

६४. स्वाभिप्रायं प्रकटयति कृष्णः—पूर्णस्येति। तत्तुष्टचै भक्तसन्तोषार्थम्।

६५. देहाद्यनुसन्धानरहिता जातेत्याह ग्रन्थकारः—श्रीशेति।

पृ० ४५२. ७०. दुकूलशैथिल्ये कारणम्—यद्योगत इति। वस्त्रयोगतः। अमूपां गोपीनाम्। आसु गोपीपु।

पृ० ४५४. ८०. यद्वा, पतत् किमबोधयत्?—विषमेष्विति। 'गुणिना कामेन इच्छया रतिस्थितिः रतौ स्थितिः न कार्या' इति योज्यम्। निर्वहणं निर्वाहः।

८२. कञ्चुकीसंसे कारणम्—विधायेति। यदर्थं कृष्णार्थम्। ईदृशं सुन्दरम्।

८३. साश्चर्यमाह ग्रन्थकारः—केशा इति। गुणी पटः।

८४. ग्रन्थकार आह—अनङ्गेति। अनङ्गश्रियं मोक्षलक्ष्मीम्।

८५. देव्यादीनां मोहो युक्त इत्याह ग्रन्थकारः—इदमिति।

८७. कामार्दिताः कुतः?—ऐकान्तिकीमिति।

पृ० ४५५. ८९. चन्द्रविस्मये कारणम्—गोकुलेति।

९३. यद्वा—पुंस इति। चित्तजाङ्कुरः कामाङ्कुरः। क्षपान्वये रात्रिसम्बन्धे।

९४. चन्द्रस्य सकामत्वे कारणम्—यदीति। मातुलः कंसः, भवतीति शेषः। भागिनेयः कृष्णः। 'ततश्चे'ति योज्यम्। चन्द्रार्तिदः, लक्ष्मीभ्रातृत्वात् चन्द्रस्य मातुलस्य आर्तिदः।

पृ० ४५६. ९५. नाश्चर्यमित्याह ग्रन्थकारः—अनेकेति।

९८. तावत्सङ्ख्यायां कारणम्—यावन्त इति।

१०१. धर्मदूरीकरणे स्वमभिप्रायमाह कृष्णः—मदङ्गनेति।

पृ० ४५७. १०२. करेण मुखमार्जने कारणम्—आगन्तुकेति ।

१०५. गाने कारणम्—यत्पदाग्रमिति ।

१०६. गोप्यो रात्रिं प्रार्थयन्ति—अयीति । उच्यसे, अस्माभिरिति शेषः ।

१०७. आगमिष्यन्तं सूर्यमाहुः—अतनुसुखमिति । 'इति मत्त्वा' इति योज्यम् ।

पृ० ४५८. १०९. इदं किमभूदित्याह ग्रन्थकारः—एवमिति । मुकुन्दः कृष्णः देव्या रमयाऽलभ्यम् अनङ्गसौख्यं मोक्षसौख्यमदात् । ताः जीवभावमदुः । कृष्णस्तासां जीवभावं गृहीत्वा एभ्यो यदनङ्गसौख्यं प्रादात् तत् तैरेव ज्ञेयं वाच्यं वा यैर्लब्धम् । वयन्तु अवर्णनीयमित्येव वदाम इति भावः ।

११०. स्वमतमाह ग्रन्थकारः—सन्निर्गुणेति । अस्य सुखस्य । तत् आत्मसुखम् ।

१११. जलक्रीडायां कारणम्—मत्प्रीतीति ।

११२. किमबोधयत् कृष्णः—त्वाह्योऽपीति । असुमान् प्राणी ।

पृ० ४५९. ११६. यद्वा, तासामेव जलप्रवेशे आशयमाह ग्रन्थकारः—गोपिकयेति । गोपिकया गोप्या । लघु शीघ्रम् ।

११८. किमसूचयन् गोप्यः ?—अस्मानिति । अव रक्ष । करनीरजातक्षीरैः करकमलस्थैर्दुग्धैः । यद्वा, करे यानि नीराणि तेभ्यो जातानि, तदिच्छाशक्त्येत्यर्थः, क्षीराणि तैः ।

पृ० ४६०. १२५. दिव्यसुमनसामागमनं योग्यमित्याह ग्रन्थकारः—यत्किञ्चिदिति । अमुष्य मनसः । विचित्रतमम् अत्यद्भुतम् ।

१२६. ग्रन्थकारः देवस्तुतिमाह—इत्थमिति । ईदृक् सुखम् ।

१३१. उभयत्र क्रीडायां कोऽभिप्राय इति ग्रन्थकार आह—संयोगेति । विप्रलम्भो वियोगः । सः कृष्णः । तदुक्तम्—

'एको रागिषु राजते प्रियतमादेहार्धधारी हरो
नीरागेषु जनो विमुक्तललनासङ्गो न यस्मात् परः ।
दुर्वारस्मरबाण - पन्नगविषव्याविद्धमुग्धो जनः
शेषः कामविडम्बितान्नविषयान् भोक्तुं न मोक्तुं क्षमः ॥
जीर्णा एव मनोरथाश्च हृदये यातं च तद्यौवनं
हन्ताऽङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना ।
किं युक्तं सहसाऽभ्युपैति बलवान् कालः कृतान्तोऽक्षमी
हाऽज्ञातं मदनान्तकाङ्घ्रियुगलं मुक्ताऽस्ति नान्या गतिः ॥'

पृ० ४६१. १३२. उपमया सूचितमर्थमाह ग्रन्थकारः––लब्ध्वेति ।

१३३. ज्ञानिना संसारे कथं स्थेयमिति कृष्णलीलातः सूचितं ग्रन्थकारेण––लब्ध इति । अशेषजडेषु अज्ञेषु । अशेषशरदः अशेषाणि स्वायुर्वर्षाणि । विहारादिभिः लौकिकाचारादिभिः । अबहिः अन्तः । वृत्तिं वर्तनम् । सप्रमदां प्रमदया सहिताम् । संसारे कथं स्थेयम् ? तदुक्तं 'नवरत्नस्तोत्रे' गोस्वामिभिः––

"चित्तोद्वेगं विधायापि हरिर्यद्यत् करिष्यति ।
तथैव तस्य लीलेति मत्त्वा चिन्तां द्रुतं त्यजेत् ।।
तस्मात् सर्वात्मना नित्यं 'श्रीकृष्णः शरणं मम' ।
वदद्भिरेव सततं स्थेयमित्येव मे मतिः ।।"

३४. एत्र कामविजयं कृष्णजरितम् अतिचित्रम् अवर्णनीयं चेत्याह ग्रन्थकारः––शिवविधीति । सवो यज्ञः । यत्र कामे । समवधाने सान्निध्ये । येन कृष्णेन । उक्तञ्च––

"कृष्णार्द्रतैललिप्ते गेहे निवसन् सुसावधानेन ।
मनसा किञ्चिल्लिप्तः कृष्णमुखो वाऽन्यथा भावता ।।
पुंसा स्त्रियाऽथवाऽपि हि सवयसि वासोऽवधानतो विहितः ।
विषयेच्छा ह्यल्पा तु स्यादेवाऽवशतः स्मरेत् कृष्णम् ।।"

१३७. 'अवरुद्धे'त्यत्र कारणमाह ग्रन्थकारः––रस इति । तं वीर्यरसम् ।

पृ० ४६२. १४१. सत्काव्यलक्ष्म ग्रन्थकारः प्राह––यत्रेति । यत्र काव्ये । अत्र संसारे ।

१४४. प्रश्ने कारणम्––य इति । तत् निषिद्धं कार्यम् । श्रुत्या स्ववाचा । इति अभिप्रायेण ।

१४६. विषयिणां सन्देहनिवृत्त्यर्थं पृच्छामीत्याह––साङ्गोपाङ्गेति । साङ्गोपाङ्गसुयोगवैभवविधिः अङ्गोपाङ्गसहितो भक्तियोगवैभवप्रकारः, यमाद्यष्टाङ्गयोगप्रकारश्च । भवता व्यक्तीकृतः, मया ज्ञातः । अत्र विषयप्रधाने शृङ्गाररसे योगे च । अत्र विचक्षणाः अज्ञानावृतज्ञानिनः । अत्र विप्रलम्भशृङ्गाररसे एव । एतस्मिन् योग्यमयोग्यं वा कुर्वन्तीत्येतस्मिन् विषये उदितं प्रकटितम्, युक्तोक्तितः योग्यवचनैः ।

पृ० ४६३. १४८. अज्ञमतं स्वस्मिन्नभिनयति—तस्मादिति । अन्यस्थितिम् अधर्मस्थितिम् । यत् यतः । योगी सन्निति यावत् । तत् तस्मात् ।

१४९. पुनस्तदेव पृच्छति—सर्वोऽपीति । स्वात्महितः स्वस्मिन् आत्मनि च हितः । तत्कृतिः कृष्णकृतिः ।

१५१. श्रीशुकः साश्चर्यमाह—राजन्निति । असौ शङ्का, गौरवं राज्ञ इत्यर्थः । निरघां निर्दुष्टाम् ।

१५२. अज्ञो विधिनिषेधाधिकारी, न ज्ञानी । तत्र प्रभोः किं वाच्यम् ?—राजन्निति । 'सत्यमिदं तव वचः, किं तत् ? 'निषिद्धमि'ति योज्यम् । इति शास्त्रम् । अस्मिन् संसारे । प्रतिविधेः निषेधस्य । तद्भीः विध्यविधिभयम् ।

१५३. यद्वा—सृष्टिकाले मायामूढो ब्रह्मा प्रभुकृपया प्रभुं विज्ञाय शास्त्राणि व्यरचयत् । अतः शास्त्रोल्लङ्घनभीः ब्रह्मणा निर्मितानां प्राणिमात्राणामेतद्युक्तम् । परन्तु तज्जनकस्य प्रभोः सर्वतन्त्रस्वतन्त्रस्य श्रीकृष्णस्य शास्त्रोल्लङ्घनजभीतेः सम्भावनापि नास्तीत्याह ग्रन्थकारः—यन्मायेति । 'विधिः यदा दिङ्मूढवृत्तिरभवत्, तदे'ति योज्यम् । लेखाः शास्त्राणि ।

१५४. यद्वा—युक्तिमाह शुकः—पित्र्यालेखेति ।

१५५. पुनर्युक्त्यैवाह शुकः युग्मेन—यदीति ।

पृ० ४६४. १५६. विधीति । स्थूलधियः अज्ञान् । एतदुक्तम्—

'न धर्मो विधिनिर्दिष्टो नाप्यधर्मोऽविधेयजः ।
किन्तु तौ यावुभौ श्रीशप्रीत्यप्रीतिविधायिनौ ॥' इति ।

तदात्मना गोपीरूपया श्रुत्या ।

१५९. साश्चर्यमाह शुकः—काकोलादनमिति । काकमेचकं नाम विषं काकोलम्, तस्य अदनं भक्षणं काकोलादनं विषभक्षमित्यर्थः ।

१६१. कृतज्ञेन नेदं चिन्तनीयम्—कृत्स्नेति । अवद्यं दोषरूपम् ।

१६३. तर्हि किं कार्यं किञ्च न कार्यम् ?—येषामिति । तद्वचनोक्तं शास्त्रोक्तम् । उक्तवचनोपेतं तात्पर्यवृत्त्या उपदेशयुक्तम् ।

पृ० ४६५. १६४. सतां कर्माणि बन्धाय न भवन्ति, किं पुनः सद्वृन्दावनश्रीयुतस्य कृष्णस्य कर्माणि बन्धाय न भवन्तीति वक्तव्यमित्याह—सत्कर्माणीति । पापाय बन्धाय ।

१६५. कैमुत्यन्यायेनाह—तेजस्विनामिति । अगूढं स्पष्टम् ।

१६६. पुनः साहसतोऽच्युतस्य भीतिर्नास्तीति कैमुतिकन्यायमाह—येऽनन्यभावेति । अयमंशः साहसभीत्यंशः ।

१६७. तत्त्वमाह ग्रन्थकारः—योऽखिलेति । तत्पत्यन्तरगतः तासां पत्यन्तरगतः । तथात्वे सतीति यावत् । सत्यः पतिव्रताः ।

१६८. पूर्वोक्तं स्मारयति—तासामिति । तासां गोपीनाम्, इति प्रोक्तम् । प्राक् एवं प्रोक्तम्—
'उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।
तिष्ठन्नपि हृषीकेशं किमुताधोक्षजाप्रिया ॥' इति,
'नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥' इति च ।

पृ० ४६६. १७२. तर्हि कर्मकाण्डस्य वैयर्थ्यमायातम् ? तत्राह ज्ञानिनि कर्मकाण्डस्य वैयर्थ्यं युग्मेन—यत्पृष्टमिति । तस्य कर्मकाण्डस्य । अनुसृतानन्दसन्दोहभाजि प्राक्तनाभ्यासानुसारिसुखसन्दोहभाजि प्राणिनि । 'किं वा कर्म अनुष्ठेयमि'ति योज्यम् । तत्त्वाज्ञानिनां कर्मकाण्डस्य अधिकारः, अतस्तत्र साफल्यं तस्येति भावः ।

१७४. तदेव स्फुटयति—नित्यमिति । नित्यं नैमित्तिकं च कर्मेति शेषः, अभ्युपगतं प्राप्तम् । तत्पुरस्तात् आत्मलाभात् प्रागेव । यद्वा, भगवद्भक्तस्य ज्ञानिनोऽग्रे । प्रतोली रथ्या । 'यत् यतः तत् । कर्म सम्पाद्यमि'ति योज्यम् । 'सौख्यमेवे'ति 'एव'करो योज्यः । असौ ज्ञानी । इति हेतोः ।

१७६. कुतः पुनः कृष्णे पुण्यपापसम्बन्ध इत्याह—वृन्दावन इति । सुरसात्मनि रसरूपे । कुर्वत्यपि, कर्मेति पदमध्याहार्यम् ।

१७८. तत्त्वं कथयति शुकः—भगवानिति । तत् तस्मात्, अस्य कृष्णस्य ।

पृ० ४६७. १७९. दोषभावनायाः प्रायश्चित्तं कारयति करोति च शुकः-- अनवद्येति । यत् यस्मात् कारणात् अलीकं मिथ्या अवद्यं पापं च त्वयोक्तम्, अस्मात् हेतोः त्वम् अनघां तत्प्रायश्चित्तरूपां तन्नतिमाचर, अहं च आचरामी'ति योज्यम् ।

१८०. कृष्णकृपयैव असौ रासानन्दो लभ्य इति कियती सा रात्रिः ? तत्राह--युक्त इति । योगप्रकारः योगविन्मौलि- मान्यो ब्रह्ममान्यः । अभिहिते, शुकेनेति शेषः । अस्मिन् रासे । भूतानामिति । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी'ति गीतावचनम् । तस्य कृष्णस्य ।

१८२. तेन किं तेस्पष्टम् ?--आकल्पेति । ताः प्रतीति भावः । आसां गोपीनाम् । अस्य कृष्णस्य ।

१८४. ग्रन्थकारः कृष्णप्रतिज्ञां स्मारयति--नीच इति । यत् यतः, असौ भक्तः । 'हे प्रभो ! त्वमत्र प्राप्तः, अन्यथा न चेदेवमि'त्यन्वयः ।

१८६. प्रेम्णा गोपीकृष्णौ भजति शुको ग्रन्थकारो वा विरोधा- लङ्कारेण—अनङ्गेति । तडिद्घनविलासिनौ तडिद्घनौ इव विलासिनौ । अमितकामदौ अपरिमितमनोरथपूरकौ ।

पृ० ४६८. १८७. पठनादिपराणां कामनाशफलमाह— हृद्रोगेति । पूर्वार्धो- त्तरार्धयोः 'यतः' 'ततः' इति योज्ये पदे ।

१८८. यद्वा, ननु औषधै रोगो निरस्यते, किमनया रासपञ्चा- ध्याय्या इति चेत् ? नायं हृद्रोग औषधैर्निरस्य इत्याह— यदिति । 'अच्युतानन्ते'त्यादि यन्नामापि ; अनामयकरम् आरोग्यकरम् । उक्तं च—

'वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखै-
वरतनुतया वामो भागः शिवस्य विवर्तते ।
तदपि परमं तत्त्वं गोपीजनस्य वशंवदं
मदनकदनैर्न क्लिश्येरन् कथं त्वितरे जनाः ॥'
इति ।

१८९. 'असत्कीर्तनकान्तारपरिवर्तनपांसुलम् ।
वाचं शौरिकथालापगङ्गयैव पुनीमहे ॥'
इति गताभिमानमाह ग्रन्थकारः—वाङ्ग्लान्या इति ।

'मुनिवरवदनक्षीरसिन्धूदितायाः शुकमुखक्षीराब्धेरुत्पन्नाया वाङ्नाम्न्याः कामधेनोस्तदुदितमशेषमर्थजातं गृहीतुम् अवनौ शेषोऽपि नेश' इत्यन्वयः । 'यद्यप्यहमल्पबुद्धिस्तदपि तथापि' इति योज्यम् ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः

पृ० ४६९. १. अम्बावनागमने कारणम्—येति । विहिताऽनङ्गार्चनानाम्, अनङ्गः कामः, अनङ्गम् अङ्गरहितश्च ; विहितम् अनङ्गाय कामशान्त्यर्थम् अनङ्गमङ्गरहितं वा अर्चनं याभिस्तासाम् । सा दुर्गा ।

३. गङ्गाधरपूजने कारणम्—कालिन्द्यामिति ।

४. 'किं किमर्थं धारयति शिवः ?' इति शिवं प्रणमन्तः प्रदर्शयन्ति गोपाः—गङ्गामिति । 'दातुमेवे'ति सर्वत्र सम्बन्धः । स्वं स्वीयम् ।

५. तद्वचनानि प्रदर्शयन् प्रार्थयति—आशावासेति । तद्वाक्श्रुत्या गोपवचनश्रवणेन ।

पृ० ४७०. ७. शिवां प्रार्थयन्ति—जननीति । प्रजापदं सन्ततिरूपम् ।

८. 'नः प्रीयतामि'त्युक्तौ कारणं प्रदर्शयन् जनन्या महत्त्वं प्रदर्शयति—जननीजनकाविति । गिरिशप्रीतिकरार्थदात्लेखाः गिरिशप्रीतिकराः गवादयो येऽर्थास्तेषां दानलेखस्तस्मात् ।

१०. कः कालसर्पग्रस्तः ?—सारस्वतं रसमिति । सरस्वत्या अयं सारस्वतो रसो ज्ञानानन्दरूपस्तम् ।

११. किं व्यञ्जयन्नित्याह—अन्तर्हितमहानन्द इति । अन्तर्हितः महानन्दो यस्य, नन्दपक्षे येनेति विग्रहः ।

१३. कृष्णोऽपि त्वरया तत्रागच्छत्, तत्र कारणम्—अघादिति ।

१४. पादस्पर्शे कारणम्—अनेकेति । तत्र सर्पे ।

पृ० ४७१. १८. यद्वा, नैतदाश्चर्यम्—अन्मानुषादिति । क्व तार्क्ष्यः ?—तार्क्ष्यध्वजस्येति । सध्वजः गरुडध्वजसहितः ।

२१. यद्वा, 'मृत्युभयं तु श्रीकृष्णकृपयेव निवर्तते, तत्र नन्दः प्रमाणमित्याह' ग्रन्थकारः—सेवामिति । अतनुत कुरुत । अरण्यदेशे आनन्दकाननादौ ।

पृ० ४७२. २३. कैमुत्येनाऽऽह--अहिमपीति । तद्रस्तं कालाहिग्रस्तम् ।

२४. यद्वा, तदुद्धारात् स्वीयं सुदर्शनकरत्वं व्यक्तीचकार--शापाहिभावमिति ।

२८. कोऽपि भवतु, ब्राह्मणोपहासकृच्चेत् तामसीं गतिं लभत एवेति ज्ञापनाय तमपृच्छत्--गीताभ्यासेति । तमः तमःप्रधानां योनिम् ।

२९. कैमुत्येनाह--कस्यापीति । अवहेलनम् अनादरम् ।

३०. वेदरहस्यं ध्वनयति ग्रन्थकारः--जप इति । सवादि यज्ञादि, रयेन कृतं तस्येति सम्बन्धः ।

पृ० ४७३. ३१. ग्रन्थकारो युग्मेनाऽऽह--विप्र इति । किमत्र प्रमाणम् ?--नात्रेति । कुतः ? वच्छ्रीवत्सेति ।

३२. अतिमर्यादे किं कार्यम् ?--विप्रेति ।

३३. अन्वर्थनामानं मां चकर्थ--विद्याधरेति । एनं माम् ।

३४. दण्डस्तु उचित एव, परन्तु अयं विशेषलाभः--विप्र इति । स्वतः स्वयम् । विद्वान् त्वम् । 'असौ ब्रह्मनिष्ठाग्रणीश्चेत्, तर्हि तु अभिनन्द्य इति सिद्धमेव' इति । 'परन्तु अयमधुना यः त्वत्पादलाभः स अधिकः' इति च योज्यम् । येन मया ।

३५. दयालुत्वं दर्शयन् साश्चर्यमाह--अहो इति ।

३६. नमति--सर्वशूरेति । 'दयया रञ्जितः' 'दयया अरं जितः' इति वा । 'दयया सर्वभूतेषु तुष्यत्याशु जनार्दनः' इति ।

पृ० ४७४. ४०. रामसाहित्ये कारणमाह ग्रन्थकारः--सुखस्थितिरिति । अनेन रामेण सह ।

४१. अर्थस्याऽनर्थत्व व्यञ्जयन् 'योग्यमेव तत्कर्मे'त्याह ग्रन्थकार.--सद्वृत्तेति । 'अस्मिन् संसारे स्वल्पं धनमलंभवती'ति योज्यम् । धनदार्पितश्रीः धनदेन अर्पिता श्रीर्यस्मै । निधिमौलिः चडामणिः ।

पृ० ४७४. ४४. द्रुमधारणात् किमवोधि ?—श्रेयानीति । यत् यतः । सप्रमदः प्रकृष्टमदसहितः, प्रमदाभिः सहितश्च ।

४४. स्त्रीत्यागे कारणम्—आत्मरक्षार्थमिति ।

४५. शिरोरत्नजिहीर्षायां कारणम्—यदुन्मादादिति ।

पृ० ४७५. ४८. भक्तोत्कर्षमाह ग्रन्थकारः—निष्टेति ।

४९. शालवृक्षत्यागे मुष्टिप्रहारे च कारणम्—विशालमिति । राजराजः कुवेरः ।

५१. रामाय दाने कारणम्—धनमिति । अनुजन्मना कनिष्ठेन ।

५२. 'पश्यन्तीनामि'त्युक्तौ कारणमाह ग्रन्थकारः—बाह्योपप्लवेति ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः

पृ० ४७६. १. युगलेनैकस्य किमिति स्तुतिः ?—द्वयोरिति । द्वयोः रामकृष्णयोः । तदद्वयं तयोरैक्यम् । ताः गोप्यः ।

२. यद्वा, द्वैताङ्गीकारं विना स्तुतिः निर्गुणे मुस्यादिवृत्तिप्रवृत्तिश्च न घटते इति वेदार्थस्पष्टीकरणार्थं युग्मेनाऽस्तुवन् इत्याह ग्रन्थकारः—द्वैतोरीकरणादिति ।

४. द्वादशभिरेव युग्मैर्गीति कारणं दृष्टान्त-दार्ष्टान्तिकयोः द्वादशसंख्यावत्वमाह—सच्छाय इति । मिहिरः सूर्यः ।

७. गोपीप्रश्नः—किं केन सौभाग्यं सुखं च प्राप्नोति ?—आराम इति । अन्यथा विनाऽस्माकम् ।

पृ० ४७७. ९. मुरल्या मुखसान्निध्यमसहन्त्य आहुर्गोप्यः—यदिति । कथं दातुरविवेकः ? यदनुचितेति ।

१३. एवं वर्णने कैमुत्येन मोहं कारणमाह ग्रन्थकारः—देव्योऽपीति ।

१४. ग्रन्थकारः साश्चर्यमाह—श्रुतीति । वासोपस्मृतिः वस्त्रविस्मरणम्, वासः ( श्रुतिविषयात्तसुख ) इति च्छेदः, मन्वादिस्मृत्युक्तिशून्या स्थितिश्च ।

१५. आश्चर्ये कारणम्—वेणुध्वनीति । वेणुध्वनितस्तनितः वेणोर्ध्वनितमेव स्तनितं गर्जितं यस्य सः । मुहुः स्फुरद्धारहास-सितविद्युत् मुहुः स्फुरद्धारहास एव सिता विद्युत् यस्मिन् सः ।

१६. पुनः आश्चर्येणाऽऽह पशवोऽपीति ।

पृ० ४७८. १७. पशूनां निष्क्रिया स्थितिः योग्येत्याहुः––अनवद्यमिति। हृद्यं मनोहरम्।

२०. इदन्तु अत्यसाधु जातम्––अजेति। 'सरसभावविदामपि नो न सुलभमि'ति योज्यम्।

२२. सखेदं साश्चर्यं चाहुः—धन्या इति।

२३. ये हंसा इति। यत् यतः। सन्मानसारोचिताः सतां मानसेन आ समन्तात् रोचिताः शोभिताः; शुद्धमनस्त्वात् तेषु प्रसादोन्मुखत्वं नाश्चर्याय। चित्रमिति। ये सकृत् निजाङ्घ्रितुलसीस्वादाः, तान् मत्तान् मलिनान् अलीन् प्रसादाद्दतान् कुरुते एतच्चित्रमित्यन्वयः।

पृ० ४७९. २४. सखेदं कैमुत्येनाहुः––हंसानामिति। गोमतयः गाव इव मतिर्यासामिति, गोष्वेव मतिर्यासामिति च।

२५. कथमस्मास्वेव निर्दयत्वमिति सशोकमाहुः––अतेति। एतत् निर्दयत्वम्।

२७. सासूयमाहुः––या इति। ईदृशः दुखदः।

२९. छत्रभावे कारणम्––सर्वदेति। इति हेतोः।

३०. यदाऽभिनयादिदर्शनेन गीतश्रवणेन ब्रह्मादयो मोहिताः, तत्र वयं का मूर्खाः इत्याहुर्यशोदाम्––नानेति।

पृ० ४८०. ३२. 'यशोदे! पुत्रकृतिं प्रच्छाय व्यर्थमेवास्मान् 'यूयं मूर्खाः' इति वदसि' इत्याहुः––यदस्मानिति। 'इदं सत्पुत्रस्य अद्‌भुतकृतिफलमिति न वेत्सि' इति योज्यम्।

३३. 'एवं मा वदे'त्याहुः—बाल इति। वितथार्थं व्यर्थम्।

३४. निःशङ्कं यशोदायै कथने कारणम्––विधीति।

३५. प्रार्थयन्ति––ध्वजेति। पविः वज्रम्।

३६. कथं तद्दर्शनात् ईदृशी वो दशा?––ध्वजाङ्कुशेति। अनङ्गभावा कामभावा, अङ्गभावरहितोऽनङ्गो मोक्षस्तस्मिन् भावो यस्याः सा मतिश्च।

३७. भक्तानामिति। भक्तानां गोपबालानाम्। ते पशवः कृष्णसखाः तत्पत्न्यश्च।

------

पृ० ४८१. ३८. गृहाशात्यागेऽस्मद्दृष्टान्तः साधुः। परन्तु तास्तु सुखिन्यो न वयमिति तप्यन्त आहुः—वयमिति।

४०. स भगवान् कथं तुष्येत् ?—स्तोत्रपाठमिति।

४१. प्रभुलीलामाह ग्रन्थकारः—मवाध्वनीति।

४२. 'देवकी'त्याद्युक्तौ कारणम्—देवकीति।

४३. स्वेच्छया प्राकट्यं स्वीकरोतीत्याहुः—अनन्येति। पूर्णचन्द्रोदयः तत्सदृशः कृष्णः रसायनविशेषश्च, तद्वत् त्रितापहरः।

४४. हरिणादयो धन्या इत्याहुः—एणा इति। हंसोत्तंसाः हंसोत्तमाः।

पृ० ४८२. ४५. यूयं किमधन्याः ?—वयं तत्पदेति।

४६. अस्मत्खेदं न दूरयसीति साश्चर्यमाहुः—गोपदेति।

४८. गोपीनां तापहरं तन्मुखमासीदिति न चित्रमित्याह ग्रन्थकारः—अनल्पमिति।

५०. ग्रन्थकारः प्रार्थयति—यद्यपीति। अस्मिन् जने मादृशजने ॥३५॥

## षट्त्रिंशोऽध्यायः

पृ० ४८३. १. 'तर्ही'त्युक्तौ कारणम्—श्रीश इति। अक्षिगतामुपेयुपि प्रत्यक्षे भवितव्ये।

३. वृषरूपेणाऽऽगमने कारणम्—वृषात्मनेति।

४. भूकम्पने कारणम्—स्वधर्मादिति।

५. पदा भूलेखने कारणम्—अस्मदिति। अस्मत्स्वामी कंसः। रे कृष्णेति सम्बोधनम्।

पृ० ४८४. ७. बालपृष्ठ इति। शृङ्गाराद्युल्लसद्बलः शृङ्गारे एव उल्लसत् बलं यस्य सः, शृङ्गाः तीक्ष्णशृङ्गाग्रैरधिकम् उल्लसत् बलं यस्य स इति वा।

८. शकृत्त्यागे कारणम्—अपवित्रेति। आधात् अकरोत्। नृगो गर्भमोचकः।

१०. कैमुत्येनाह—दाम्भिकोऽपीति। नॄन् गच्छतीति नृगो धर्मः। यद्वा नृजातेः गोजातेश्च मोचकः।

११. तं दृष्ट्वा तत्रसुरिति नाश्चर्यम्—रजोगुणेति। 'अत एनं निरीक्ष्य ते गोपाः' इति योज्योऽन्वयः।

१२. गोपानां शरणागमनं कृष्णकर्तृकमाश्वासनञ्च योग्यमेवेत्याह—तत्प्राणेति। 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति हि तदुक्तिः।

१३. तं हन्तुमैच्छत् इत्यपि योग्यम्—बाह्याभ्यन्तरेति।

पृ० ४८५. १४. कथं सर्वज्ञस्य वञ्चनं सम्भवति ?––कृत्रिमेति ।

१५. बाहुशब्देन सूचितमर्थमाह ग्रन्थकारः––ये मङ्क्तेति । यौ बाहू ।

१६. कृष्णो ब्रूते––दृष्ट्वेति । वर्षवरः षण्ढः । योग्यशब्दकृतितः 'गोपालैः पशुभिर्मन्दे'त्यादिशब्दात्, निर्भयतया मित्रांसे स्वबाहुं संस्थाप्य स्थित इति कृतितश्च ।

२०. पुरः शृङ्गकरणे कारणम्––रजस्तम इति । कष्टं क्रुद्धम्, अन्तरम् अन्तःकरणम् ।

पृ० ४८६. २१. वेगेन धावने कारणम्—कथमिति । अमन्दं शीघ्रम् । 'अशनिस्थित' इत्यत्र 'अशनिर्यथा' इति पाठान्तरम् । अशनिः वज्रं शनिभिन्नश्च ।

२३. युद्धधर्मं दर्शयन् बाहुयुद्धे कारणमाह—याद‍ृगिति । आजिः सङ्ग्रामः ।

२४. शृङ्गग्रहणे कारणम्—येनेति ।

२५. अष्टादशपदापसारणे कारणम्—अष्टादशेति । अस्मिन् संसारे । पदानि स्थानानि ।

पृ० ४८७. ३०. अम्बरमिव पीडने कारणम्––अदभ्रेति । अम्बरम् आकाशम् ।

३२. शृङ्गेणैव हनने कारणम्—ये यथेति ।

३४. 'यमलोकं जगामे'त्युक्तेस्तात्पर्यमाह—पादस्पर्शेति ।

३५. यद्वा— शरीर इति । शरीरे रथसंज्ञां आहुः 'शरीरं रथमेवच, इन्द्रियाणी'त्यादौ । तल्लयतः शरीरनाशात् ।

पृ० ४८८. ३८. ग्राह्यांशमाह ग्रन्थकारः—शान्तचित्तेति ।

४१. अरिष्टशब्दात् सूचितमर्थमाह—पापपुण्येति । अरिष्टं 'रिष्टं क्षेमाऽशुभाभावे, अरिष्टं तु शुभाशुभे' इति कोशः ।

४३. ग्रन्थकारः प्राह—अरिष्टमिति । अरिष्टं दैत्यम् अशुभं च, 'अरिष्टमशुभे तक्रे सूतिकागार आसवे । शुभे मरण-चिह्ने च' इति मेदिनी ।

४४. देवाः किं चक्रुः ?—वीक्ष्येति ।

४५. अरिष्टनाशोत्तरमेव तत्त्वनिरूपणे नारदहर्षः कारण-मित्याह—अरिष्टनाशोत्तरमेवेति ।

पृ० ४८९. ४६. उभयोर्विन्यासकथने कारणम्—त्रिनेति । स रामः ।

४७. किं ब्रुवता निवारितः ?—नप्रियाविति । अमन्तुं निरपराधम् ।

४९. पार्श्वैर्बन्धे कारणम्—इमाविति ।

५०. ग्रन्थकारः प्राह—कृत इति । चित्तं निगृह्य 'सत्त्वं विशुद्धं वसुदेवशब्दितम्' इत्युक्तेः ।

पृ० ४९०. ५५. धनुर्यागकरणे समबलत्वं कारणम्—वीक्ष्येति । उक्तदिने चतुर्दश्याम् ।

५६. धनुर्यागे कारणम्—स्वधर्म इति ।

५९. 'दानपते' इत्यस्यार्थं प्रकस्वन् अक्रूरप्रार्थनायां हेतुमाह—स्विष्टानिष्टमिति । इति हेतोः ।

पृ० ४९१. ६४. युग्मम् । स्वहितचिकीर्षुणा किं कार्यम् ?—नष्ट इति । इह भगवति ।

६६. पाणिग्रहणे कारणम्—यन्मदिष्टमिति ।

६७. किमाह ?—वैफल्यमिति ।

६९. नैतदस्मत्साध्यमिति वाच्यम्—अहमिति ।

पृ० ४९२. ७१. कंसः प्राह—सत्यमिति । गौः धेनुः वाणी च ।

७२. कंसः श्लेषार्थकं श्लोकमाह—अश्वेति । अक्रूरेति सम्बुद्धिः, शान्तगुणाग्रणीश्च । तन्मदिष्टमिति । मदिष्टं न करिष्यसि चेत् श्वास्थितिं शुनकवत् स्थितिं करिष्यसीति गूढोऽर्थः ।

७४. 'सिद्ध्यसिद्ध्योरि'त्यादिवाक्यस्य तात्पर्यमाह–मोदामोदेति । अन्यथा सिद्धिमप्राप्य ।

७८. क्वचित् स्वल्पाश्रयं विना कार्यसिद्धिर्न भवतीत्यत्र दृष्टान्तमाह ग्रन्थकारः—तेजस्वीति ।

पृ० ४९३. ७९. अक्रूरप्रसिद्धिकारि 'कंस'शब्दः इति सदृष्टान्तमाह ग्रन्थकारः—यन्महदग्र इति ।

८०. अक्रूरभाषणतात्पर्यं दर्शयति ग्रन्थकारः—सेवाधर्म इति । प्राक्तनः सेवाधर्मः ।

८१. अक्रूरः किं चकार ?—उक्त्वेति । निशम्य, कंसवाक्यमिति भावः । किञ्चिदपि भावि तन्मरणादि जानन्नपि नोवाच, किन्तु तदा प्रतस्थे' इत्यादि योज्यम् ।

८२. ससन्तोषेण हृदा स्वस्वस्थानयाने कारणम्—येन केनेति ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः

पृ० ४९४. २. केशिनो मनसः साम्यमाह---यो बुद्ध्यादीति । स्ववृत्तिकलितस्वाराज्यदीव्यत्सुखः स्ववृत्तिकलितं मनोरथगतं स्वाराज्यरूपं दीव्यत् सुखं यस्य सः । तमोभूः अज्ञानजन्यः ।

पृ० ४९५. ११. केशिनं वर्णयति ग्रन्थकारः—यद्रूपेक्षणलज्जयेति । यस्य केशिनः रूपेक्षणेन रूपदर्शनेन या लज्जा तया । विरूपस्थितिं रूपशून्यस्थितिम् । कणभुजा कणादेन, नैयायिका मनसोऽणुत्वं मन्वते इति तत्त्वम् ।

१२. प्रथमं तदपराधं प्रतीक्षन् स्थित इत्याह—तस्याश्वस्येति । नैच्छत्, वधमिति भावः । प्रसभहनने बलात् हनने ।

पृ० ४९६. १३. पादाघाते कारणम्—असुरेति ।

१६. पादप्रहारवञ्चनात् किमबोधि ?---रे केशिन्निति । धनुःशताध्वरचितः, यज्ञाः, अध्वेति च्छेदश्च, धनु शतमिताध्वना रचितोऽपि योगः मन्मारणोपायोः विफलः स्यात् ।

१७. वञ्चनमिषात् पादग्रहणेन दूरे क्षेपणेन च किमबोधि ?---य इति । आत्मशुद्ध्युन्मुखः आत्मशुद्ध्यर्थं मदभिमुखः । तद्द्वयात् पादधारण—दूरप्रक्षेपणरूपद्वयात् ।

१९. शुकेन उपमाऽन्वर्था वर्णिता—सुखभञ्जनान्तरूपमिति । जनेलोके स्वीकृतरूपं तकाररूपं च ।

२०. मुखे बाहुप्रवेशने कारणम्—सखलीन इति । अस्मिन् लोके ।

पृ० ४९७. २४. प्राणनिरोधने कारणम्—असुर इति ।

२५. भुजस्पर्शेन दन्तनिपातने श्रौतं· कारणम्—सम्प्राप्येति । दुर्जनमुखस्थितिम् दुर्जनः मुखमिव मुख्यो येषां तेषु स्थितिं तत्सहवासमित्यर्थः । इह जगति । इतीव ध्वनयन् इति भावः ।

२७. तद्दन्तनिपतने कारणम्---शुचयोऽपीति । द्विजा अपि ब्राह्मणा अपि दुःसङ्गादधो निपतन्ति इत्यपि सूचितम् ।

३०. 'स भूमिमि'त्यादेः श्रुतेरर्थं दर्शयति---अधितिष्ठत इति । सः स्वपराक्रमादच्युतः ।

पृ० ४९८. ३२. तन्मुखरोधनेन सूचितमर्थमाह ग्रन्थकारः---इन्द्रियेष्विति । हृदयाश्वः मनोरूपोऽश्वः ।

३४. एवं प्रथमं सावज्ञं दूरप्रक्षेपात् मुखसेधाच्च सूचितमर्थमाह—बाह्याक्षाणीति । द्विपदाकुलं कामक्रोधाद्याकुलम् । तत् तदा । मद्दूरतः मत्तः दूरतः ।

पृ० ४९९. ४०. मुखात् करनिष्कासने सूचितमर्थमाह--बहूवीजेति । बहूनि बीजानि वासनाः । मनोमूर्तेः मनोरूपस्येति भावः ।

४१. अविस्मये कारणम्--पत्रखेनैवेति । भक्तहृदिस्थेनेति भावः ।

४३. स्तुतौ कारणम्--अवारीति ।

४५. नारदागमने कारणम्--मत्ताल्विकेति ।

४६. स्तुतौ कारणम्--न हीति ।

पृ० ५००. ५०. नारदः प्राह--हन्तेति । हन्तेति हर्षे ।

५३. माथुरीं भाविनीं लीला स्मारयति--यावदिति ।

पृ० ५०१. ५६. नारदः प्राह--वन्दे इति । विविक्तरसं पवित्ररासम् ।

५७. नत्वा किं चकार ?--इत्यानम्येति ।

५९. भृत्यवश्यतां दर्शयति ग्रन्थकारः--दैत्यहन्तेति ।

६१. केशिवधानन्तरं व्योमासुरवधलीलानिरूपणे कारणम्--यद्व्योमेति ।

पृ० ५०२. ६२. व्योमगुहापदात् सूचितमर्थमाह ग्रन्थकारः--क्षणमात्रमिति ।

६४. ग्रन्थकारः प्राह--शून्याकार इति । इह जगति । ताम् ईशविमुखाम् । तत् तदा । तस्याः मायायाः सकाशात् ॥३७॥

## अष्टत्रिंशोऽध्यायः

पृ० ५०३. २. अक्रूरस्य विचारमाह--आनन्दभाजनमिति ।

५. अक्रूरः प्राह--दुर्दिष्टमिति । दुर्दिष्टं दुर्भाग्यम् ।

६. आत्मानं मा नयेत्याह--अह्न इति । सर्वारिचक्राणि सकलशत्रुचक्राणि, समस्ताराविशिष्टरथाङ्गानि च ।

पृ० ५०४. १०. अक्रूरो मृगप्रादक्षिण्येन कृष्णदर्शनं सम्भावयति--यानिति ।

पृ० ५०५. १५. इतस्ततोऽवलोक्य आह अक्रूरः--देशोऽयमिति ।

१७. पुनरितस्ततोऽवलोक्य आहाऽक्रूरः--न तादृगिति ।

१८. स्वस्य धन्यतां वर्णयति अक्रूरः--यस्मिन्निति । देशः व्रजः । ते गोपाः । धन्यात् व्रजात्, धन्यतरात् वृक्षसमूहात्, धन्यतमतः गोपेभ्यः ।

पृ० ५०६. २५. गोपान् स्तौति अक्रूरः--यन्नाभीति । ते गोपाः ।

पृ० ५०७. २९. अक्रूरवचनमिदम्——तापापहमिति । नित्यवैरिणोः कालिय-गरुडयोः ।

३०. अक्रूरोक्तिरियम्——इन्द्र इति । आसु गोपीषु ।

३२. देवादीनामपि विस्मयजनकं श्रीशदर्शनं मे इति प्राह अक्रूरः——पुण्यमिति । सुविस्मयजनं आश्चर्यप्रादुर्भावस्य ।

पृ० ५०८. ३५. हन्त सर्वश्रेष्ठो भवामीत्याह अक्रूरः——आगत्येति ।

४१. ग्रन्थकारः प्राह——तं वीक्ष्येति । तं व्रजम् ।

४२. अक्रूरः प्राह——सूर्यमण्डलमिति । अनुमतिः सम्मतिः ।

पृ० ५०९. ४५. वज्रं वर्णयति अक्रूरः——सकलेति ।

४७. कुतोऽस्य घोष इति नाम–क्रीडदिति । एनं व्रजम् । एषः व्रजः ।

४९. कर्णयोश्चक्षुषोश्च मित्रता दृढा जातेत्याह–नित्योल्लासीति ।

पृ० ५१०. ५३. कृष्णचरणाङ्कितभूमिदर्शनार्थं दृशं सावधानयति अत्रेति । आसितम् उपविष्टम् ।

५५. आत्मभावं विस्मृत्य भूमौ लोठनेऽक्रूरभक्तिः कारणमित्याह ग्रन्थकारः——सर्वस्मिन्निति ।

५६. चरणस्पर्शसुखानुभवं तु शिर एव लेभे इत्याह–श्रीशाङ्घ्रीति ।

पृ० ५११. ५९. धावने कारणम्——श्रुतिश्रुत इति ।

६०. परमानन्दं लेभे इत्याह——अदृष्टेति । वस्तुनः कस्यापि ।

६२. नामाकथने कारणम्——व्यक्तमिति । लोकदृशा गोपीदृशा । क्रूरकर्म मथुरानयनरूपम् ।

६३. किं सूचयन् पस्पर्श इत्याह——सप्रेमेति ।

६६. आलिङ्गनान्निर्मलप्रेमानुभवो लब्ध इत्याह——न केवलमिति । तन्मिषतः आलिङ्गनमिषतः 'सुहृदाशयो लब्ध' इति योज्यम् ।

पृ० ५१२. ६९. पूर्वकालं निन्दयन् उत्तरकालं च स्तुवन्नात्मनः कृतार्थता-माह——अस्मादिति । अनेहसः कालात् ।

७०. तदा कीदृशी ह्यक्रूरस्थितिः ?——इतीति । लोलं चञ्चलम् । अक्रूरगोकुलम् अक्रूरेन्द्रियसमूहः ।

७१. युग्मेन नन्दः अक्रूरं सान्त्वयति——लाभ इति ।

७३. भगवद्दर्शनाद् अध्वपरिश्रमो निवृत्त इति नाश्चर्यमित्याह ग्रन्थकारः——भगवदिति ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः

पृ० ५१३. १. असतां व्यर्थाः सतां च सत्याः मनोरथा भवन्तीत्याह ग्रन्थकारः—भवन्तीति । संसृतिवर्त्मसम्भवाः संसृतिवर्त्मनि सम्भवः सम्यगैश्वर्यं येषां ते असन्तः; अर्थं परमार्थमपि मृषैवोदरियन्ति । अथ च सतां मनोरथाः सत्याः श्रम-हारिणश्च भवन्ति, कुतः ? हरिप्रसादतः ।

४. ब्रह्मणोऽप्याश्चर्यकृद् भगवद्वचः—यो जगदिति । तस्य अक्रूरस्य ।

५. आशिषि कारणम्—पूर्ववदिति ।

पृ० ५१४. १२. पारतन्त्र्यं महद् दुःखदम्—अकार्यमिति । अवकलय्य ज्ञात्वा । अनवद्यवत् निर्दुष्टमिव ।

१४. कंसचरितमाह अक्रूरः—नाऽऽस्तानिति ।

१५. कथं सर्वानवमन्य तिष्ठति इति चेत् शृणु—सर्वानिति ।

पृ० ५१५. १६. अस्मांस्तु तृणतुल्यान् गणयति, तत्र को हेतुः ?—य इति ।

२४. मत्कृत्यं मया कृतं, त्वत्कृत्यं त्वं कुरु इति प्रार्थयत्यक्रूरः—यत्कृत्यमिति ।

पृ० ५१६. २५. भगवानपि क्रोधमाच्छाद्य प्राहसत्, तत्रा कारणम्—शृण्वन्निति । सन्दिष्टदत्तेक्षणः तत्तद्भाग्ये दत्तेक्षणः ।

२६. पुनर्हास्ये कारणम्—यो दुर्मतिरिति । अलं पर्याप्तम् ।

२८. भक्तप्रियाप्रियौ मे तथेत्याह श्रीकृष्णः—न यद्यपीति ।

३१. प्रथमं कृष्णपित्रे न्यवेदयम्, ततो नन्दो गोपान्, नन्दस्यापि तावत् तत्त्वज्ञानं न, तस्य पर्वदर्शनौत्सुक्यात् इत्याह ग्रन्थकारः—व्यजिज्ञपदिति ।

पृ० ५१७. ३६. गोपीव्यथया सूचितमर्थमाह—सगुणेति ।

३७. गोपीदुःखे कारणम्—अज्ञानेति । तथा दुःखिन्यः । तत्प्रमाणाः कृष्णस्य प्रमाणाः ।

३९. वाससः शैथिल्ये कारणम्—यस्येति ।

पृ० ५१८. ४५. वलयशैथिल्येन सूचितमर्थमाह—सवलय इति । तस्य कंसस्य ।

४७. निवृत्ताशेषवृत्तित्वे कारणम्—आपरोक्ष्यमिति । येन मार्गेण ।

५०. गोप्यो ब्रह्माणं दूषयन्ति—धातस्त्वमिति । अहो इति खेदे सम्बोधनम् ।

पृ० ५१९. ५२. गोप्यः 'एतत्तु उपहासास्पदं त्वच्चरितमि'त्याहुः—बालोऽहमिति ।

५४. कथमिति चेच्छृणु—परोक्षस्येति ।

५५. ब्रह्माण पृच्छन्ति गोप्यः—अधिवसर्सीति । सत्यवनविषये सतीनामवनविषये सत्यं ब्रूहि इति सम्बन्धः ।

५६. 'अहो ! जाड्यं ते धियः' इत्याहुर्गोप्यः—त्यक्त्वेति ।

५७. अहो ते क्रौर्यमित्याहुर्गोप्यः—दत्तेति । सः दोषः ।

५८. सर्वान् निन्दन्त्यः आहुः गोप्यः—विधिरिति ।

५९. 'हा दैव ! कृष्णोऽपि नास्मान् पश्यती'त्याहुर्गोप्यः—आभिरिति ।

पृ० ५२०. ६०. 'हन्त ! कस्मात् कृष्णः इह आयास्यति, यतो वयं ग्राम्य' इत्याहुर्गोप्यः—नानाहावेति । शृङ्गारभावजाः क्रिया हावाः । यत् यतः ।

६१. आत्मनं सान्त्वयन्त्य आहुर्गोप्यः—आगोपाङ्गनमिति । अनेन कृष्णेन ।

६३. यदक्रूरकराच्चक्षुर्हरणं तद्योग्यमेवेति काचिदाह—क्रूरकरादिति ।

६७. कोऽयमक्रूरः ?—क्रूराक्रूरेति ।

पृ० ५२१. ७२. 'कृष्णार्थं किं किं न कृतम् ? तथाप्यसौ वज्रसारहृदयत्वं कथमाश्रयति ?' इत्याहुर्गोप्यः—त्यक्त इति । असौ अनादरः ।

७३. 'अविचारिणीरस्मान् धिक्' इति काचिदाह—भुवीति ।

७४. विधिं प्रार्थयति काचित् युग्मेन—अप्येष इति । सदयेति अभिधानं विधिसम्बुद्धिर्वा ।

पृ० ५२२. ७६. अस्माकं प्रारब्धमेवेदृक्—यदक्रूर इति ।

७७. विरहमसहन्ती काचिदेकां पृच्छति—कं देवमिति ।

७८. 'कृष्णस्य निवारणं कंसगृहेऽवश्यं भावि, अतोऽत्रैव कुतो न निवारणीयः ?' इति काचिदाह—यद्वारणमिति । सः कंसः ।

७९. न्यायमाह युग्मेन ग्रन्थकारः—वस्त्विवति । अदुर्लभं सुलभम् ।

८०. ग्रन्थकारः प्राह—धन्याधन्यत्वेति । इह जगति ।

८१. 'हा ! कृष्णं विना कथं स्थास्यामः ? भूमिर्विदीर्णा भविष्यति चेत्, तस्यां लीना भवामः; परन्तु सापि सापत्न्यं कुरुते इत्याहुः गोप्यः—साकमिति । पुरः अग्रे ।

पृ० ५२३. ८२. रोदनं गमने निषिद्धमपि कृष्णप्राप्तिकरं भवेदित्याशया रुरुदुरित्याह ग्रन्थकारः—रास इति ।

८४. असुस्वरं शस्त्रे निपिद्धं न सुस्वरं लोके, तथादृष्टत्वादित्याह ग्रन्थकारः—श्रुत्वापीति । इमे गोपाः ।

८५. लज्जात्यागे कारणम्—थाऽस्मदिति । तया लज्जया, निजजातिभाजा स्त्रीलिङ्गया ।

८६. 'गोविन्ददामोदरमाधवे'त्युक्तौ कारणम्—इन्द्रस्त्वमिति । ताः गाः । माधवः मधुवंशोद्भवः । 'परन्तु वस्तुतः सः सत्प्रेमबद्धः ।' सः त्वं कथं प्रेमबन्धनं छित्वा गच्छसीति प्राहुः ।

८७. रथारोहणं नाश्चर्यकरमित्याह ग्रन्थकारः—ब्रह्मेशेति । तद्रथं तस्याऽक्रूरस्य रथमा नाश्चुत किञ्चिदिति ।

८८. 'दौत्यकैः आयास्ये' इत्युक्तेस्तात्पर्यं सूचयति ग्रन्थकारः—आसामिति । पुरः अग्रे । दूतात्मना आत्मागमं दूतरूपेण आत्मनः आगमनन् । प्रायशः अग्रे उद्धवप्रेषणात् ।

रथोत्थितं रजः उत्प्रेक्षापूर्वकं वर्णयति—

'नायं रजोऽणुसङ्घो रथमथ परितः समावृणोद् योऽस्य ।
प्रेयो जनजीवानां निचयो नो चेत् कथं विचेष्टास्ताः ।।'

( गो० कृ० चं० )

प्रेयोजना विचेष्टा चलनादिव्यापारशून्याः अचेतनाः कथमासन् ? यस्मादिमेऽचेतना, अत एतेषां जीवा एव रजो रूपेण रथं परिवेष्ट्य तेन साकं गतपा इति ज्ञायते इति भावः ।

पृ० ५२४. ९५. जले तथादर्शने कारणम्—यथेति । भुवने जले ।

९६. युक्तं तयोर्जले दर्शनमित्याह ग्रन्थकारः—उपाधीति ।

पृ० ५२५. ९७. 'शरीर-जलशेषभुमिषु अहमेवेति प्रभुणा दर्शितमित्याह ग्रन्थकारः—योऽहमिति । इति अभिप्रायेण, तत् स्वरूपम्, व्यतानीत् विस्तारितवान् ।

१०१. ग्रन्थकारः प्राह—मायावितानेति । वितानं विस्तारः । तद्रूपेति । तद्रूपनिर्णये वितीर्णं दत्तं निजम् अन्तरङ्गं येन सः ।

१०२. 'कृष्णरूपं तेनाबोधी'त्याह ग्रन्थकारः—स वेदेति ।

१०३. सरोमाञ्चं तदानन्दं वर्णयति ग्रन्थकारः—तदेति ।

पृ० ५२६. १०४. मनोऽपि तस्य नम्रमभूदित्याह ग्रन्थकारः–तत्तादृश इति । कथं तुष्टात्र ?—भक्तानुग्रहेति ।। ३९ ।।

## चत्वारिंशोऽध्याय:

पृ० ५२७. ५. अक्रूर: प्रणमति—आब्रह्मेति ।
६. अनन्यभावेन त्वामेव स्तौमीत्याह—आलस्येति ।

पृ० ५२८. ११. अक्रूर: प्रार्थयति—भक्तानामिति । हंसात्मकोऽपि शुद्धरूपोऽपि । स: त्वं शुद्धरूप: ।
१२. मनसो दुर्निग्रहत्वं वदन् कृष्णस्य दयालुत्वमाह अक्रूर:—संकृदपीति । तदिदमेव त्वयि मनस: स्थिरीकरणम् । इह जगति ।

पृ० ५२९. १५. अक्रूर: पुन: प्रार्थयति—कर्तेति । क्रमेण अपकर्ता उपकर्ता च । अवदात: शुद्ध: । एवं वदन् साष्टाङ्गं प्रणनाम अक्रूर: ।
१६. भगवद्दर्शनकर्तुरीदृशी स्थितिर्भवतीत्याह—विशेषरूपमिति । भुवनोल्लसत् भुवनेषु स्वर्गमृत्युपाताललोकेषु भुवने जले च उल्लसत् सर्वोत्कर्षे विराजमानम् ।
१८. जले स्वरूपदर्शनाद् भगवता किमबोधि ?—कंसादिति । भुवने जले ॥ ४० ॥

## एकचत्वारिंशोऽध्याय:

पृ० ५३०. ३. नटानुकरणे कारणम्—बालाविति ।
४. वराद्यनुक्तौ कारणम्–यद्रूपमिति । अवहित्या आकारगुप्ति: ।
६. कर्मकरणे कारणम्—सद्योगिनेति ।

पृ० ५३१. ७. अघमर्षण सार्थकम्—अकुर्वन्निति ।
१४. पाणिग्रहणे कारणम्—य: सतामिति ।

पृ० ५३२. १५. हासे कारणम्—नृशंसेति ।
१६. अक्रूरयापने कारणम्—साक्रूरेति ।

'बाल्ये रागवती सा प्राचीनेत्याकलय्य नन्वधुना ।
मित्र: ससर्प शीघ्रं नव्यां तत्सम्मुखीं दिशं रागात् ॥'

( गो० कृ० चं० )

मित्र: सूर्य: शीघ्रं रागात् प्रेमत: तत्सम्मुखीं प्राचीसंमुखीं, नव्यां पश्चिमां ( दिशं ) प्रति ससर्प गच्छति स्म । किं कृत्वेव ?—'सा प्राची, बाल्ये बाल्यावस्थायामेव, रागवती रागो रक्तिमा प्रीतिर्वा तद्वती आसीत्, अधुना तु वृद्धावस्थायां, अस्तङ्गमनावस्थायां ने'त्याकलय्य ज्ञात्वा । ननु सम्भावमायाम् ।

पृ० ५३४. ३६. ग्रन्थकारो ब्रवीति—पुरीति । तयोः कृष्ण-रामयोः ।

३८. नरदेववर्त्मनेति किमुक्तम् ? तत्राह ग्रन्थकारः—नरवदिति ।

पृ० ५३५. ४०. तासां मनोहरणे कारणम्—गोपीवदिति ।

४४. याचने कारणं कल्पयति ग्रन्थकारः—कुचेलेति ।

पृ० ५३६. ४७. 'आवयोरि'ति वचने कारणमाह कृष्णः—निःशेषेति ।

५१. कृष्णाशयमाह ग्रन्थकारः—गुणवदिति ।

५४. किं मे दासो बुभूषसि ? तत्राप्ययोग्योऽसि इत्याह रजकः—विलसदिति । अन्योऽर्थः स्पष्टः ।

पृ० ५३७. ५९. सोल्लुण्ठमिति । यद्दारैरिति । उक्तञ्च—

'आत्मानं सततं रक्षेद् दारैरपि धनैरपि ।' इति ।

६०. गलच्छेदे कारणम्—तत् तादृगिति ।

पृ० ५३८. ६९. ग्रन्थकारः प्राह—कंसीदीति । सुरसभावगतं सुराणां सभायामवगतं ज्ञातम् । यद्वा—सुरसः शोभनरसः आत्मानन्द-रसो भावो भक्तिः, तौ गतौ निरूपितौ यस्मिस्तं श्लोकं ( पद्यं यशश्च ) व्याख्यातुम् आद्यं तत्प्रतीकमहरदिति सम्बन्धः ।

७०. रजकमारणेन सूचितमर्थमाह ग्रन्थकारः—गोविप्रेति ।

पृ० ५३९. ७४. स्त्रीवचः शृण्वतः अन्याशयमाह ग्रन्थकारः—युष्मदिति । रङ्गकारं रङ्गस्थानकर्तारं तन्नामानं च । तुलनीयश्चात्रायं श्लोकः—

'रङ्गे गजेन्द्रमल्लेन्द्रबाधा नो भविताऽधुना ।
इति रोषाद् द्रुतं कृष्णो रङ्गकारं समापयत् ॥'
( गो० कृ० चं० )

रङ्गे मल्लाक्रीडास्थाने, नः अस्माकं गजेन्द्रमल्लेन्द्र-बाधा गजेन्द्रः कुवलयापीडः, तस्य मल्लेन्द्राः चाणूरादयः तेषां बाधा अधुना भविता इति रोषादिव चेति गम्योत्प्रेक्षा । पूर्वमेव रङ्गकर्ताऽयमवश्यं हन्तव्यः, अन्यथा अनेकरङ्गोत्पत्तिसम्भवादिति भावः ।

७५. अनुजीविनां पलायने कारणमाह ग्रन्थकारः—अष्ट इति ।

७६. तद्वस्त्राहरणे कारणम्—मच्चिन्तनादिति । आवरणमज्ञानम् । अनर्घ्यवासोव्याजात् अनर्घ्यस्य वाससः आवरणस्य वस्त्रस्य व्याजात् आहरणमिषात् ।

७८. यद्वा—वास इति । निर्वासश्रीः निर्गता वासश्रीः वस्त्रशोभा यस्मात् ।

पृ० ५४०. ७९. आभूषणे कारणम्—भूमाविति। तम् उन्मत्तम्। अमून् गुणिनः। स्वप्रियभूषणेषु स्थानेषु।

८१. उष्णीषत्वेन स्वीकारे कारणम्—दुर्जनेति। आदधुः उष्णीषत्वेनेत्यर्थः।

८५. ग्रन्थकारः प्राह—गुणघटनाचणधीरिति। गुणसम्पादन निपुणबुद्धिः।

८६. प्रीतौ कारणम्—ये यत्नेनेति।

पृ० ५४१. ८८. शोभायां कारणम्—अनेकगुणवानिति।

८९. भगवद्रूपमपश्यदित्याह—अशेषमिति।

९४. शक्तिरिति। सदर्पितादरकृते सद्भिर्यदर्पितं तस्याऽऽदरं करोतीति तस्मै। समिष्टं भगवत्प्राप्तिरूपम्।

९५. सिद्ध्यतीति। अविकलं सम्पूर्णम्।

पृ० ५४२. ९६. भगवानपि कृपादृष्ट्याऽपश्यत्—गात्रमिति।

९९. जात्यादिहीनानामपि भक्तानां न किमपि दुर्लभमित्याह—यद्दुर्लभमिति। ईदृशी। भक्तिर्मनसः शुद्धिं विना न भवतीति सदृष्टान्तमाह माधवः—

'सूचीच्छिद्रे वेशस्तन्तोर्नष्टाऽन्यसूक्ष्मसूत्रस्य।
सूक्ष्माग्रस्य च भविता सुकरस्तद्वद्धरौ श्रीशे॥
मनसः प्रवेशकोऽपि हि नष्टेच्छातन्तुकस्य भवतीह।
दीनस्य मृदोरात्मलीनस्य यतेत तन्मनःशुद्धौ॥'

इति।

१००. सुदाम्नो गृहाभिमुखभवने कारणं सूचयन् दामबन्धनलीलां स्मारयति—अनन्तगुणेति। निजावनकृते नलकूबर-मणिग्रीवरक्षार्थम्।

१०१. किं बोधयन् ययौ? तदाऽऽह—यत्रेति।

पृ० ५४३. १०३. दैवी विचित्रा गतिरित्याह—सन्ध्यातोऽपीति।

१०६. तस्योत्सवे कारणम्—ययेति।

१०७. किं चकार?—गत्वेति। विधेः भाग्यस्य। अन्तरमिव अन्तःकरणमिव।

पृ० ५४४. ११२. किं प्राह?—शुद्धमिति। एतत् सर्वं कदाऽकारि?—जन्मनि पुरेति। कुतः?—सौलभ्यादिति।

पृ०, ५४४. ११५. विना सत्पुरुषागमनं व्यर्थो गृहस्थाश्रम इत्याह—स्त्री चेदिति । तत् तदा । को रज्येदिति । साध्वङ्घ्रिपद्मागमः साधूमङ्घ्रिपद्मयोः आगमः आगमनं न चेत् रमणवर्णनार्हता न गृहस्थाश्रमस्येति भावः । उक्ताश्चात्र श्लोकाः—

'न्यायार्जितधन - स्तत्त्वज्ञाननिष्ठो - ऽतिथिप्रियः ।
शास्त्रवित् सत्यवादी च गृहस्थोऽपि विमुच्यते ॥
यदि रामा यदि च इमा यदि तनयो विनयधीगुणोपेतः ।
तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम् ॥
सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी
सन्मित्रं सधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः ।
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः सङ्गमुपासते च सततं धन्यो गृहस्थाश्रमः ॥'

साधुसङ्गमनं विना स एव दुःखस्वरूपः; कथम् ?—

'न विप्रपादोदकपङ्किलानि न वेदशास्त्रध्वनिगर्जितानि ।
स्वाहा-स्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ॥
क्रोशन्तः शिशवः सवारि सदनं पङ्कावृतं चाङ्गणं
शय्या दंशवती च रूक्षमशनं धूमेन पूर्णं गृहम् ।
भार्या निष्ठुरभाषिणी प्रभुरपि क्रोधेन पूर्णं सदा
स्नानं शीतलवारिणा हि सततं धिग् धिग् गृहस्थाश्रमम् ॥
तावद् विद्याऽनवद्या गुणगणमहिमा रूपसम्पत्तिशौर्यं
स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव ।
यावत् पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्राद्-
'धे बाबा नास्ति तैलं न च लवणमपीत्यादिवाचां प्रचारः ॥'

अत उक्तम्—'सन्त एतस्य चिछन्दन्ति मनोव्यासङ्गमुक्तिभिः' इति ।

११६. प्रार्थयति—निजागमनत इति । यथा कृतार्थः कर्तव्यः, तथैव कृतार्थः कर्तव्यः ।

पृ० ५४५, ११८. सश्लेषमाह कृष्णः—कृतार्थ इति ।

११९. सश्लेषं साश्चर्यं चाऽऽह ग्रन्थकारः—ययोदय इति ।

१२२. ग्रन्थकारः प्राह—नान्यदिति । तदात्तसुमनाः तेभ्यः आत्तानि गृहीतानि सुमनांसि पुष्पाणि शोभनान्तःकरणानि

१२२. वा येन सः । यद्वा तदा तस्मिन् काले अस्ताः वशीकृताः सुमनसः शोभनान्तःकरणाः विद्वांसो येन स इति श्लेषः । अतः किं कर्तव्यम् ?—

'स्वान्तं परमपवित्रं पूर्णं हरिचिन्तनोपयोगि सदा।
बालानां तस्याशो भार्यायां याति तदनु सुते ॥
अवशिष्टस्तस्यांशा मातरि ताते प्रतिष्ठायाम्।
कीर्तौ तथाऽभिमाने चैवं गच्छन्ति सर्वतः सर्वे ॥
नो शिष्टः कृष्णं दातुं ततो हि बाल्यान्मनो हरौ निहितम्।
ध्रुव इव हरिरूपं तद् भवति न वार्धके तथा सुकरम् ॥'
( माधवः )

पृ० ५४६. १२६. ग्रन्थकारः प्राह—या पुष्पितेति। तां वाचम् ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः

पृ० ५४७. ३. हास्ये कारणम्—वामन इति।

पृ० ५४८. ८. यद्वा 'नादत्तमुपतिष्ठते' इति न्यायमनुसरति—नादत्तमिति।
९. विस्मये कारणमाह—दृष्ट्वा इति।
१०. यद्वा, हासे कारणम्—अनर्घ्येति।
१२. 'मात्रा स्वस्रा दुहित्रे'त्यादिना उक्तमर्थं प्रकारान्तरेणाह—का त्वमिति।
१३. 'ते श्रेयो भविष्यती'त्युक्तौ कारणम्—न श्रद्धेति।
१४. यद्वा, 'गन्धाः पान्तु' इत्यादिना उक्तमर्थमाह—गन्धार्पणेति।

पृ० ५४९. १७. नामकथने कारणमाह कुब्जा—कौटिल्यमिति।
१८. 'भोजे'त्युक्तौ कारणं ब्रूते कुब्जा—त्वद्रिपोरिति।
१९. 'त्वां विना कं पूजयामी'त्याह—कृष्णेति।
२०. 'अन्यतम'पदात् सूचितमर्थमाह—युवामेवेति।
२३. भक्तेच्छया भगवदिच्छेत्याह ग्रन्थकारः—नेशस्येति। 'अन्यतम' इति पदात् सूचितमाह—यदिति। 'रुचिराङ्गरागं स्वं स्वीकुर्वन्' इति योज्यम्। तथा रुचिराङ्गरागाम्।

पृ० ५५०. २५. भक्तमनोरथपूरणरूपं व्रतमाह—सकलार्थदोऽपीति।
२७. पद्भ्यामाक्रमणे कारणम्—पादसम्पीडनमिति।
३४. चिबुकग्रहणे कारणमाह कृष्णः—कंसस्यैवेति।

पृ० ५५१. ३६. यद्वा, हनुग्रहणे कारणमुत्प्रेक्षते—द्विषत्पुरगतामिति।
३७. यद्वा—वास इति। मुकुरे दर्पणे।
३९. यद्वा—यत्प्रागिति। प्राक् रामावतारे। देयं वनवासदानम्।

पृ० ५५२. ४५. सरलत्वसम्पादने कारणम्—पुत्रेणेति ।

४६. नाश्चर्यमेतदित्याह ग्रन्थकारः—यन्नामेति ।

४७. उपकारानुरूपं प्रत्युपकारं चकारेत्याह ग्रन्थकारः—मृदुभाषणेति । त्रिवक्रतापद्धतिम् त्रिवक्रत्वजनिततापस्य हृतिं वा ।

४८. कृष्णस्य कल्पतरुस्वभाववत्त्वमाह ग्रन्थकारः—सदसदपीति । स्ववृत्त्या 'बध्नन्ति घ्नन्ती'त्युक्तिसूचितया ।

पृ० ५५३. ५०. 'जातकामे'ति नाश्चर्यमित्याह ग्रन्थकारः—यत्पदाब्जेति ।

५२. वस्त्राकर्षणे कारणम्—मदङ्गरागेति ।

पृ० ५५४. ५८. हासे कारणं तर्कयति—दिव्यानीति ।

६२. गोपादीनां मुखावलोकने कारणमाह कृष्णः—गोप्य इति । 'मे मया वः युष्माकम् उक्तिः अवरी'ति योज्यम् ।

पृ० ५५५. ६७. कृष्णः प्राह—अवक्रेति । अवक्रभावाकलिताखिलाङ्गः सरलभावव्याप्तसम्पूर्णाङ्गः । अनङ्गो रसः कामरसो ब्रह्मरसश्च । सत्सुरतोदयश्च सतां सुरतायाः देवसमूहस्य च उदयः ।

६८. 'पान्थानां त्वं परायणम्' इत्युक्तेराशयमाह—अविद्येति ।

७०. 'साग्रजोऽर्चितः' इत्यत्र कारणम्—पराङ्मुख्यमिति ।

७१. आश्चर्यमाह—श्रीश इति । अध्यक्षे प्रत्यक्षे ।

७२. पौरप्रश्ने कारणम्—यत्कृत इति ।

पृ० ५५६. ७६. धनुर्भङ्गे कारणम्—यद्द्रव्यमिति । उत अथवा, तत् तदा ।

७७. यद्वा भङ्गे कारणम्—गुणवानपीति । तत् तदा, धनुषि विषये ।

७९. यद्वा—येनेति । येन पुष्पेण ।

पृ० ५५७. ८३. इक्षुदण्डोपमानं कुतः ?—अनेकपर्वेति ।

८५. नाश्चर्यमित्याह—यद्बलादिति ।

८६. शकलाभ्यां हनने कारणमाह युग्मेन—वक्र इति ।

८७. तद्धनुरिति । स्वात्मनि अवलिप्तत्वम्—'असङ्गो ह्ययं पुरुषः', 'आकाशवदवलेपकः' इति श्रौतवचनानि प्रमाणान्यत्र ।

ईश्वरभजने दृढनिश्चयो विधेयः—

'ईशोऽस्मत्पोषणकृत् स्वीकुर्मो न हि तावताऽस्य सदयत्वम् ।
सर्वस्यापि पितुस्तत्कर्मैवावश्यकं विदुः सर्वे ।।
स हि चेदस्मान् भक्तान् विषयविषादध्वनः परावृत्त्य ।
सन्मार्गे निजमुखदो न स्यादन्यस्ततः सदय इह ।।'

पृ० ५५७. ८८. धनुर्भङ्गचरितात् सूचितमर्थमाह कृष्णः—धर्म इति।
८९. हर्षे कारणम्—धर्मबलमिति।

पृ० ५५८. ९४. सूर्यास्तगमने कारणम्—विना कर्मेति। तत् तस्मात्।
९५. ग्रन्थकारः प्राह—आवश्यकेति। तदीयविरहोक्तिरित्थम्—'सुखं प्रभाता रजनीयमाशिषः सत्या बभुवुः पुरयोषितां ध्रुवम्' इति। अन्तरङ्गा हार्दा।
९६. अङ्घ्रिक्षालने कारणम्—दुर्जनेति।

पृ० ५५९. १००. मन्त्रीति। तच्छ्रुत्वा आज्ञापयामास—

आहूयन्तां सुमल्लाः प्रबलतररवैर्नादयन्तो दिगन्तान्,
सज्जन्तां रङ्गमञ्चास्तदुपरि ससुखं पौरमुख्याः स्ववर्ग्याः।
तिष्ठन्तु स्कन्नदानप्रसृतकरटसुस्निग्धसिन्दूरबिन्दू-
रक्ताङ्गो द्राक् करीन्द्रो मदबलविकलो द्वारि केलिं करोतु॥
( गो० कृ० चं० )

आहूयन्ताम् आकारणीयाः, सज्जन्तां सज्जा भवन्तु पौरमुख्याः स्ववर्ग्याः स्वस्वजातिमुख्याः पौरवर्गाः। स्कन्नदानप्रसृतकरटसुस्निग्धसिन्दूरबिन्दूरक्ताङ्गः स्कन्नानि गलितानि यानि दानानि मदोदकानि, तैः ( कृत्वा ) प्रसृताः करटसम्बन्धिनः गण्डसम्बन्धिनः सुस्निग्धाः सिन्दूरबिन्दवो यस्य सः, द्वारि रोधनार्थं कुवलयापीडो गजः स्थापनीय इत्यर्थः।

पृ० ५६०. १०५. कुवलयापीडं गजं द्वारि किमिति दध्युः ?—अहङ्कारमिति। द्विषन्तः कामादयः॥ ४२॥

## त्रिचत्वारिंशोऽध्यायः

पृ० ५६१. १. अनाहूतगमने कारणम्—आनीयेति।

पृ० ५६२. ८. परिकरबन्धने कारणम्—युद्धादिति।
९. यद्वा—क्षोणीति। क्षोणीक्षोदविचक्षणः क्षोणीक्षोदे क्षो[illegible]-पीडायां विचक्षणः।
१०. कुटिलकेशबन्धने कारणम्—निजत्राणेति।
१३. साम्ना कथने नामसादृश्यं हेतुमाह—अहमिति।

पृ० ५६३. १६. यमगृहप्रेषणोक्तौ कारणम्—नृशंस इति।
१७. कुतो मार्गं नादात् ? तद्बीजमाह—आसत्यलोकेति।

पृ० ५६३. १८. अहङ्काराश्रितचरितं प्रदर्शयति—हरिरिति। 'अनवलोकन-मि'त्यत्र द्रष्टव्यम्—
'कलौ न राजन्! जगतां परं गुरुं
यक्ष्यन्ति पाखण्डविभिन्नचेतसः' इति।
१९. 'न तस्याऽकार्यं किमपी'त्याह—नीच इति।
२०. करात् दूरीभवनेन सूचितमर्थमाह—अप्यल्पेति।
२१. गजताडनेन सूचितमर्थमाह—कर्तृत्वेनेति। येन बन्धनरूपेण कर्तृत्वेन, पाशेनेव चोरः यात्रिकं, भवपथमार्गाक्रमिणं नरमाकर्षति, तद्गलितः तस्माद् बन्धनात् गलितः सन् अमुमहङ्कारं निहत्य यस्तिष्ठति, सः। बुद्धिस्थितिं बुद्धेः स्थितिर्यस्मिन् श्रीकृष्णे। यद्वा बुद्धौ स्थितिर्यस्य श्रीकृष्णस्य तं बुद्धिप्रेरकं गायत्रीप्रतिपाद्यं यातीति भावः।
२२. 'क्रुद्ध' इत्यनेन सूचितं साहङ्काराणां लक्षणमाह—यात इति। प्रयत्नः करिणः प्रयासः।

पृ० ५६४. २४. 'पुच्छ'ग्रहणेन सूचितमर्थमाह—कृत्नेति। श्रुतिगम्या 'ब्रह्मपुच्छं प्रतिष्ठे'त्यादिना उपनिषद्वाक्येन 'को ह्येवाऽन्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादि'त्यादिना च गम्या ज्ञेया भगवत्स्थितिः।
२६. 'युक्तोपमे'त्याह—अगोद्धरणेति।
२८. हस्तेन प्रहारे कारणम्—तुल्यमेवेति।
२९. अरिविजये नीतिं दर्शयति—दर्शयित्वेति।
३०. भूमिपतने कारणम्—एतदिति।

पृ० ५६५. ३२. दन्ताभ्यां हनने कारणम्—द्विजेति।
३५. निर्भयत्वेन मारणे कारणम्—मधुलब्धेति।
३६. अङ्घ्र्या आक्रमणे कारणम्—स्वापत्येति। भूहेतुमिति। 'पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकां ह्यकल्पयत्' इति हि श्रुतिः।
३७. यद्वा—गजेति। अङ्कुशपदेन अङ्कुशयुक्तेन पादेन।
३८. मृगेन्द्र इवेति दृष्टान्तो युक्त इत्याह—अयमिति।
३९. दन्तोत्पाटने कारणम्—अवतारेति।

पृ० ५६६. ४७. दन्तपाणित्वे कारणम्—मद्धस्तादिति।
४८. बलदेवेन कुतो न हतः?—कथम्भूतोऽपीति।
४९. बलदेवेन दन्तग्रहणे कारणम्—शास्त्रसिद्धमिति।

पृ० ५६७. ५३. स्कन्धे दन्तग्रहणे कारणम्---ब्रुवीति ।
५४. एकोऽप्यनेकरूपेण अभात्, तद्युक्तमित्याह---यदेति ।
५७. उद्विग्नत्वं युक्तमित्याह---निजबलेति ।

पृ० ५६८. ५९. शोभायां कारणम्---सामान्योऽपीति ।
६१. अतृप्तौ नाश्चर्यमित्याह---न दिव्येति ।
६२. ग्रन्थकारः प्राह---कीर्तिरिति । अस्मिन् रङ्गस्थाने संसारे वा, दीव्यति सर्वोत्कर्षेण विराजते यत् सुखम् ।
विषयत्यागाभ्यासपूर्वकं भजनं कार्यम्, नो चेदेवं भवति---

'आद्यस्तं राधाकृष्णेति पठति पञ्जरस्थशुकविहगः ।
दैवाद् विडालहस्ते सम्पतितस्तु स्वशब्दतो रौति ।।
एवमयं संसारी हरिनाम जपन् ददंस्तथा विपदि ।
विस्मरतीह तु सर्वं चैहिकविषयैः सदाऽऽकृष्टः ।।' इति ।

६३. अविवेकिनश्चाणूरस्य मोहत्वमाह---हता इति ।
६४. नियुद्धस्याभीष्टत्वे कारणम्---करिष्यमाणेति । भारतयुद्धे चक्रयुद्धस्य त्यक्तत्वात् माधवस्य मम बाहुयुद्धं युक्तमिति भावः ।
६५. तथोक्तौ कारणमाह कृष्णः---नाम्नेति ।

पृ० ५६९. ६७. कृष्णः प्राह---यतो भूतमयो राजेति । 'सर्वभूतमयो नृपः' इति हि वाक्यं प्रमाणमत्र ।
६९. बालोऽहमित्युक्तौ कारणमाह कृष्णः---पितामहेति ।
७०. तथोक्तौ नीतिमाह---लघुत्वेति ।
७२. 'मा धर्मः' इति च्छेदं स्वीकृत्यैवार्थं योजयति---यद्यत्रेति । 'नियुद्धं कुरु' इत्यनुक्तौ 'मयि विक्रमे'त्युक्तौ च कारणमाह चाणूरः--- नाऽस्मादिति ।। ४३ ।।

## चतुश्चत्वारिंशोऽध्यायः

पृ० ५७१. ३. पश्यन्तीनां स्त्रीणां मोहमाह---सर्वेशोऽयमिति ।
४. ग्रन्थकारः प्राह---भूपमिति । 'अश्महृदयानि' इत्यत्र 'अश्मसदृशान्' इत्यपि पाठान्तरम् ।
५. हननेच्छायां कारणमाह कृष्णः---मिथ्याभूतोऽपीति ।

पृ० ५७२. ६. ताडने कारणम्—मत्कृतेति। पितरं तु वसुदेवं क्लेशभागिनं करोमीत्यर्थः। स्वार्थं विहाय श्रीकृष्णं सख्येनैव कथं भजेत ?–

'सुहृदावुपवनदेशे तत्रैकः कति रसालवृक्षास्ते।
प्रत्येकं सन्ति फलान्येषां मूल्यं च किं भावि॥
अन्यस्तत्पतिसविधं गत्वा मित्रत्वमाम्रफलभुक् तु।
उभयोः को निपुणः शृणु तन्निपुणस्तु यः फलास्वादी॥
यस्तु व्यर्थं सङ्ख्यादिकरो मूर्खोऽपि पण्डितम्मन्यः।
एवं खलु संसारे व्यर्थप्रज्ञः कथं किमिदम्॥
कुत इति विचारणां तां व्यर्थां प्रकरोत्यमलमतिपुरुषः।
जगदीशं सख्येवाऽऽसेव्याऽऽनन्दं परं लभते॥' इति।

७. वक्षःस्थले कुतस्तताड ?—कृष्णवक्षःस्थितामिति।

९. भुजग्रहणे कारणमाह कृष्णः— यद्बलादिति।

१०. भ्रामणे कारणम्—योऽखिलेति।

११. भूपृष्ठे पातने कारणम्— कंसचारेष्विति।

१२. मुष्टितलताडनाभ्यां सूचितमर्थमाह—लोभस्वभावमिति। अरिता शत्रुता।

पृ० ५७३. १४. मदस्य स्वपादद्वेष्टृत्वात् पदा मदरूपं शलं हतवानित्याह– शल एवेति।

१५. द्विधा विदारणे कारणमाह कृष्णः—इयं श्रीरिति। हे खल कंस ! तदवगतये कंसज्ञानार्थम्।

१७. भगवदिच्छया संसारे विहर्तव्यमित्याह—इच्छेदिति। अनल्पः बहुः। आढ्यः सम्पन्नः। आद्ये अन्यसङ्कल्पे। चरमे भगवत्सङ्कल्पे।

१८. ग्रन्थकारः प्राह—एवमिति। करिचाणूरमुखानां षण्णा-मरीणाम्—अहङ्कार-मोह-लोभ-क्रोध-मद-मानरूपाणामिति भावः।

१९. पुनराह ग्रन्थकारः—एवं स इति। नृपेण कंसेन।

२०. दैवप्राबल्यमाह—कल्पित इति। नृपेण कंसेन।

२२. अज्ञानविलासमाह--प्रत्यक्षेऽपीति।

पृ० ५७४. २३. एवमुक्तौ युक्तिमाह---बाहुवीर्यमिति।

२४. लघुत्व-गुरुत्वप्रदर्शने कारणम्---क्वचिदिति।

२६. कथमिति। परमञ्चसंश्रितं स्वम्, परस्य कंसस्य मञ्चे संश्रितं स्वमात्मानम्।

पृ० ५७४. २८. खड्गेन किमबोधि ?—अहमिति ।

३०. राज्याङ्गभूत-मन्त्रिप्रभृतिजयादेव विजयो भवतीति कचाकर्षणात् सूचितमर्थमाह—प्रधानेति ।

३१. यद्वा, भक्तानुग्रहं बोधयति—ये भक्तिमन्द इति ।

पृ० ५७५. ३४. कृष्णत्वेन केशानां सजातीयत्वमङ्गीकृत्य सूचितमर्थमाह—सजातीयानिति ।

३६. यदेति । 'आद्यपतनासमवायिकारणं गुरुत्वम्' इति हि तार्किकेरितम् ।

३८. आश्चर्येणाऽऽह—अहो इति ।

३९. कर्षणे कारणमाह कृष्णः—स्वकर्मणेति ।

पृ० ५७६. ४०. यद्वा—प्रारब्धमिति । तादृशं मत्स्मृतिकारिणम् । अद्धा साक्षात् । अधात् अकरोत् ।

४२. रामचरितमाह—राम इति ।

४३. कंसानुजहननात् सूचितमर्थमाह—मूलाज्ञान इति । योगदृष्ट्या चित्तवृत्तिनिरोधे या दृष्टिस्तया ।

४५. पुष्पवृष्टौ कारणम्—शत्रुक्लेशेति । किं कार्यम् ?—

'दद्रुणकः कण्डूतौ कण्डूयनकृत् परं सुखं मनुते ।
पश्चाद् रौति तु हा हेत्येवं जगति प्रसूत धनिका ये ॥
पूर्वं विषयैः सुखमिव नानावाराङ्गनादिसंरूपैः ।
अनुभूय रोगिणो वै पश्चाद् दुःखं ततो भजेत नरसिंहम् ॥
कथम् ? पाषाणवत्—

'पाषाणोऽम्भसि पतितो नहि बहुवर्षैरपि मृदुर्भवति ।
मृत्स्ना स्यात् तु तदात्वे सुजलविमिश्रा सुबहु मृद्वी च ॥
तद्वद् दृढहरिभक्तिच्छलैः प्रसङ्गैः सुदुःसहैर्व्यथितः ।
न स्यादामो भक्तः स्वल्पैरपि हेतुभिर्द्रुतं चलितः ॥'
तत्र किं सुखम् ?—

'बालानां त्वानन्दः क्रीडनकैरेव रत्नधनबहुलः ।
तद्वद् भक्तस्यापि प्रभुणा ह्यधिको धनप्रतिष्ठातः ॥'

४६. स्वभावप्राबल्यवादिनां शास्त्रं सार्थकमभूत्, इत्याह—स्वभाव इति । लोकसन्देह-निवारणाय कंसं संस्कृतवानित्याह—कसमिति इति । ( मातरमिति : १०.४४.५० )

'प्राप्तं समाप्य कंसं कृष्णं मत्वाऽतिभीतितस्तूर्णम् ।
तत्पितरावुज्झित्वा दूरगतं समभवत् तदा दुःखम् ॥'
( गो० कृ० चं० )

पृ० ५७६. ४९. तदा कृष्णागमनसमये दुःखं कर्तुं प्रक्रान्तत्वाद् देवकीवसुदेवसम्बन्धि। तत्पितरौ देवकीवसुदेवौ उज्झित्वा त्यक्त्वा, तूर्णं दूरगतं समभवत्। कृष्णदर्शनसमय एव तयोरखिलं दुःखं शान्तमभूत्। अत्र हेतुमुत्प्रेक्षते—कृष्णं, कंसं समाप्य हत्वा प्राप्तं मत्वा अतिभीतित इव स्वपितृक्लेशप्रदस्य कंसस्येव तत्प्रयुक्तस्य ममापि हननमयं कुर्यादिति अत्यन्तभयेनेवेत्यर्थः।

पृ० ५७७. ५१. ग्रन्थकारः प्राह—आकल्पमिति। अस्मिन् जगति। अखिललोकरीतिम् बन्धमोचनरूपां पितृचरणस्पर्शवन्दनरूपां च।

५२. शिरसा प्रणामे कारणम्—एतावदिति। स्वरात्मशिरसा—
'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्॥'
इति 'स्वः'-शब्देन सदानन्दः, स एव आत्मा स्वरूपं तद्गतशिरसा। यद्वा—स्वर्गरूपेण आत्मशिरसा, 'शीर्ष्णोः द्यौः समवर्तत' इति श्रुतेः, 'शीर्ष्णोऽस्य द्यौर्धरा पद्भ्याम्' इति च स्मृतेः।
'दुःखं स्वसम्भवं किल दूरस्थं वीक्ष्य शृङ्खला शीघ्रम्।
तद्विप्रयोगभीत्या ससर्प हित्वा पदं तयोस्तु तदा॥'
(गो० कृ० चं०)
तदा दुःखनिर्गमनावसरे। शृङ्खलानिगडस्तु शीघ्रं तयोः पदं हित्वा ससर्प दूरं गतवती, मुक्ताऽभूत्। अत्रोत्प्रेक्षते—स्वसम्भवम् = अत्र स्वपदेन शृङ्खलादुःखं दूरस्थं वीक्ष्य तद्विप्रयोगभीत्या तद्वियोगेनेवेति। यदि अनयोर्दुःखमेव नास्ति तर्हि मम वैयर्थ्यमेवेति विभाव्य शृङ्खला दूरं गतवतीति भावः॥ ४४॥

## पञ्चचत्वारिंशोऽध्यायः

पृ० ५७८. १. मायया मोहने कारणम्—कार्यमिति। सद्भव्यं सतां मङ्गलरूपम्। द्वयं सद्रक्षणं पितृसौख्यं च।

३. दैवप्राबल्यं समर्थयति—पितृप्रभृतीति। तत्प्रसक्तिः, तस्य दैवस्य प्रसक्तिः।

पृ० ५७८. ४. ग्रन्थकारः जगज्जनकं श्रीकृष्णं प्रार्थयते—सर्वार्थप्रभवमिति ।

५. पुनरतिप्रेम्णा भगवन्तं भीषयन् प्रार्थयते ग्रन्थकारः—नाल्पामिति । तत् तस्मात् । तुल्यविन्न्यायतः, तुल्यविदां न्यायात् । तादृक् कल्पः । तथैव निन्द्य एव ।

पृ० ५७९. ७. पुनः प्रार्थयते ग्रन्थकारः—जात इति ।

८. देवकीवसुदेवानन्दं कैमुत्यन्यायेनाऽऽह-साधारणेति । तादृशौ आनन्दमग्नौ । अस्मिन् विषये ।

पृ० ५८०. १२. उग्रसेनाय राज्यदाने कारणम्—राज्यापहारेति । तातम् उग्रसेनम् ।

१५. यद्वा, कृष्णः प्राह—त्रैलोक्येति । भूमात्रराज्येशता पृथ्वीमात्राराज्येशत्वम् । तदर्हः राज्यार्हः । तम् उग्रसेनम् ।

१६. राज्यास्वीकारे कारणम्—शापो वेति । वेला मर्यादा ।

१८. 'निष्कपटभक्तानां सेवनमपि करोमी'ति ज्ञापयति कृष्णः—अव्याजभक्तीति । तारतम्यं न्यूनाधिकभावः ।

पृ० ५८१. २१. वृद्धानां तारुण्ये कारणं वदन् कृष्णविमुखान् निन्दति—यातमिति । प्रमा प्रमाणम् ।

२२. कृष्णविचार एव नन्दाभिसमागमे कारणम्—आसीदिति ।

२४. परिष्वङ्गे कारणम्—व्रजमिति ।

२५. यद्वा, कृष्णः प्राह—सम्बन्ध इति । हे व्रजमनुजपते नन्द ! इति सम्बोधनम् । 'आत्मा वै पुत्रनामाऽसी'ति श्रुतेः आत्मजात्मा पुत्ररूपः पित्रा अन्यो नेति भावः । स्वहृदयविलसत्-प्रेमपीयूषपात्रं स्वहृदये कृष्णहृदये विलसतः प्रेमपीयूषस्य प्रेमामृतस्य पात्रं नन्दम् ।

पृ० ५८२. २७. यद्वा—अहमिति । व्रजेशं नन्दम् ।

२८. 'पितः' इति सम्बोधनेन सूचितमर्थमाह कृष्णः—यत्कार्यमिति ।

२९. 'मन्नामग्रहणं विना कोऽपि क्षणस्तव न गतः' इति वदन् नन्दोक्तिमनुवदति कृष्णः बहुभिः श्लोकैः—कृष्णोत्तिष्ठेति ।

३०. कृष्णेति । वद पृच्छ ।

३२. सन्त्यज्येति । सघुसृणैः सकेसरैः ।

पृ० ५८३. ३५. नन्दं बहु मानयति कृष्णः—कृष्णं रक्षतेति। नन्दमुपदिशति—

'रहःस्थितो मां स्मर तात! नित्यं
न स्यात् ततो मद्विरहस्थितिस्ते।
हार्दं न चेद् दूरगतोऽन्तिकस्थ-
स्तच्चेद् विदूरोऽपि हि सन्निधिस्थः॥'

( हार्दं प्रेम, तत् प्रेमा )

'दूरस्थोऽपि समीपस्थो यो यस्य हृदये स्थितः।
यो यस्य हृदये नास्ति समीपस्थोऽपि दूरतः॥'

३९. गोपानुपदिशति—हे गोपा इति। पाकभावं पवित्रभावं बालभावं वा॰ 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः। नाकेशम् इन्द्रम्। केशवं माम्।

पृ० ५८४. ४२. पुनः प्रार्थयति—हृतमिति। वासवानन्दसमृद्धिकारी—मदनिवारणेन, वेति च च्छेदः। सवो यज्ञः।

४६. गोपीनामुपकारं स्मरति कृष्णः—निश्चित्येति। याभिः गोपीभिः। उपकृतमुपकारम्।

४७. कृष्णः प्राह—वाच्यं किमिति। अवितथं सत्यम्।

पृ० ५८५. ४८. एष्याम इत्युक्तेस्तात्पर्यमाह ग्रन्थकारः—राममिति।

५२. ग्रन्थकारः प्राह—तद्वश इति। मयि कृष्णे। तद्धार्दं तस्मिन् प्रेम।

५४. नन्दस्य गोकुलप्रेषणे तस्य तावदेव पुण्यं कारणमिति लौकिकन्यायेन प्राह युग्मेन—लोकाविति। श्रीधरः कृष्णः। पुरा पूर्वम्।

पृ० ५८६. ५८. आनन्दातिशयान्नन्दसत्कारं वसुदेवोऽपि नाकरोदित्याह—प्राग्वैरीति। मे वसुदेवस्य। समर्हणांशं सत्कारलेशम्। सुतोत्सवोत्कः सुतोत्सवे कृष्णोपनयनोत्सवे उत्कः उत्कण्ठः।

६०. ननु रामजन्मनि तु गावो न दत्ताः, कुतो 'रामजन्मे'-त्युक्तम्? तत्र अक्षरव्यवस्थामाह—रामस्येति। यस्यां रोहिण्याम्। सः शौरिः।

पृ० ५८७. ६१. समये आलस्यं न कार्यमिति ग्रन्थकारः प्राह—सति सम्प्राप्त इति।

६३. सङ्कल्पः पूरणीय इत्याह—मुक्तबन्धेनेति।

६५. गुरूपसत्तेः 'तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्' इति श्रुतेर्नैयत्यमाह—सर्वविदाऽपीति।

पृ. ५८७. ६६. गुरुगृहगमने कारणम्—विद्यावाप्तिरिति।
६७. अवन्तीपुरागमने कारणम्—यत् सर्वतोऽपीति। स्वावतारैकलक्ष्यं साधुरक्षणम्।
६९. देवमिवेत्यनेन सूचितमर्थमाह—देववदिति। श्रुत्यर्थः 'यस्य देवे'त्यादेः श्रुतेरर्थः।
७०. ग्रन्थकारः प्राह—ज्ञानिनाऽपीति।
'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥'
इति तस्यैवोक्तेः भक्तितः पत्रपुष्पफलाकाङ्क्षी भगवानिति भावः।

पृ० ५८८. ७२. दान्तावित्यनेन सूचितमर्थमाह—न रात्रिमिति।
७३. दक्षिणादानेन सूचितमर्थमाह—अदक्षिण इति। श्लेषोऽत्र।
७५. पत्न्या सह विचारेण सूचितमर्थमाह—बुद्धिमानपीति।
७६. पुत्रयाचने कारणम्—वंशवृद्धिरिति। जने लोके।
८०. अर्हणानयने कारणम्—यदीति। प्राग्वत् रामावतारवत्।

पृ० ५८९. ८१. पूजने कारणम्—मत्सुतेति।
८४. तन्मारणे कारणम्—स्वभावदुष्ट इति। अविद्या अज्ञानम्।
८६. ग्रन्थकारः प्राह—मयेति। अदरं निर्भयम्।
८७. शङ्खध्वनिना ध्वनितमिति ग्रन्थकाराभिप्रायः—यः स्यादिति।

पृ० ५९०. ९५. चरितेन सूचितमर्थमाह—स्वयमिति। एषो यमः।

पृ० ५९१. ९७. गुरोराशीर्वचनमाह द्वयेन—प्राधीता इति।

पृ० ५९२. १०८. गुरुगौरवं विधत्ते—स्वयमिति। गुरुणा कृष्णेन॥ ४५॥

## षट्चत्वारिंशोऽध्यायः

पृ० ५९४. १. गुरुशिष्याह्वाने कारणम्—मदपरोक्षेति।
५. पाणिग्रहणार्थमाह—किं वेति। वाचिकं सन्देशवाक्, कीदृक् प्रेम, असौ उद्धवः।
६. यद्वा—त्वदुपकारमिति। तन्मिषात् पाणिग्रहणमिषात्। अधात् अकरोत्।

पृ० ५९५. १०. आत्मनो व्रतकीर्तने कारणम्——गोपा एवेति ।

११. गोपीवृत्तकथने कारणम्——त्वं मद्विभूतिरिति ।
कथमहं तासां चिन्तां दूरयामि ? तत्र 'सौम्य अङ्ग !' इति सम्बोधनम् ।

१३. धनेन तत्सामर्थ्यं सञ्चारयति——आभिमिति । अस्य उद्धवस्य । 'सौम्य अङ्ग !' इति सम्बोधनम् ।

१४. सन्देशं स्वीचकारेति युक्तम्——यस्यात्र इति । सुरकृते इन्द्रार्थम् । स्पशः सेवकः । 'इति सन्देशमन्वग्रहीत्' इति योज्यम् ।

पृ० ५९६. १६. रथारोहणे कारणम्——चक्र्यन्तरङ्गेति । व्रजवासिलोकचेतोवशीकारकृते गोपीचेतोवशीकारार्थम् ।

१७. उद्धवमेव कुतः प्रेषयामास——मत्सङ्गादिति । 'श्रीशो विभूत्यात्मकम्', 'त्वं तु भागवतेऽप्यहम्' इत्युक्तेः ।

२१. वचनं सत्यं कर्तुं प्रेषयामासेत्याह——एष्यामीति । सवाचिकं दूतं सन्दिश्यमानवचनेन सहितम् ।

पृ० ५९७. २५. गोकुलशोभायां कारणम्——यत्र सदानन्देति । यत्र यस्मिन् पुरुषे सदा आनन्दस्थितिः । अतनुसुखा मोक्षसुखानुभवरूपा । यशोदयोल्लसिता यशसा दयया चउल्लसिता । तद्गोकुलं तस्य गोकुलम् इन्द्रियसमूहः । अशेषविषयेषु सर्वप्रदेशेषु शब्दादिषु वा । विशेषसुषमं विशेषशोभम्, अनुभूयते, तद्युक्तम् । अन्योऽर्थः स्पष्टः ।

२६. अच्युतबुद्ध्या पूजनं योग्यमेवेत्याह——सामान्येऽपीति । तस्योक्तं फलमित्थम्——
'दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् ।
अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चाऽऽत्मनः ॥' इति ।

२८. सुखप्रश्ने कोऽर्हः ?——प्राग्मुक्तेति ।

पृ० ५९८. ३०. वयमस्मद्बुद्ध्या पृच्छामः——अस्मद्बुद्ध्येति ।

३१. नन्दः प्राह——यस्मिन्निति । 'येभ्यः' इत्यनन्तरं 'सकाशात्' इति शेषः ।

३२. लौकिकन्यायविरुद्धोपेक्षा कृष्णेन कथं क्रियते ?——यो यद्रक्षणेति । 'उपेक्षा न जातु भविते'ति सम्बन्धः । इति हेतोः ।

पृ० ५९८. ३४. अस्मान् कृष्णः कुतः स्मरेत् ?—तच्चरित्रेति ।

३५. कृष्णस्याऽच्युतत्वे न सन्देहः—यद्धीरिति ।

३६. अहं श्रीकृष्णपराधीनोऽस्मि इत्याह—प्रागेवेति । तद्वश-गोकुलः कृष्णवशेन्द्रियसमूहः ।

पृ० ५९९. ३७. स्ववृत्तं वदन् यशोदाचरितं वर्णयति नन्दः—व्यापारमिति। अस्याः यशोदायाः ।

३८. अश्रुस्रावे कारणम्—अच्युतेति ।

पृ० ६००. ४५. यशोदा कृष्णचरितानि वर्णयति—किमु वदामीति । अपर-वेश्मगताशनलोलुपः, अः परो येषां भक्तानां तेषां गृहगत-भोजनलुब्धः; परो न भवतीत्यपरो गोपीजनस्तद्गत-भोजनलुब्धश्च ।

४६. यशोदा प्राह—परगृहाणीति । अघसत् अभक्षयत् । तदु-दिताद्भुत-तच्चरितश्रुतौ गोपीभिः उदितस्य अद्भुतस्य कृष्णचरितस्य श्रुतौ ।

४७. गोप्युक्तीरनुवदति—अद्याऽसाविति ।

४८. अद्यानेनेति । काचिदाह—गोदोहेति । पात्रमार्गणे गतायां सत्यां तरसा समेत्य तर्णको मोचित इत्यन्वयः ।

पृ० ६०१. ५४. यशोदा प्राह—इत्यादीनीति । तत्तन्मनोद्धारणं तासां तासां मनसः समाधानम् । आधातुं कर्तुम् । 'सखे उद्ध-वे'ति सम्बोधनम् ।

५६. यशोदा स्वानुभूतचरितान्याह–मम मृदादनेति । सुरभाव-जुषां देवानाम् ।

पृ० ६०२. ६१. यशोदा 'समीपमागतं प्रेम्णा एवमवदमि'ति पश्चात्तपति—किं कृष्णेति । प्रमदानुभावः स्त्रीस्वभावः, प्रकृष्टमदभाव-बोधनं च ।

६४. किमित्येवमकरोः ?—आसीदिति । इह विषये ।

पृ० ६०३. ६९. उद्धवो यशोदाभाग्यं वर्णयन् सान्त्वयति—य इहेति । अखिलेऽपि लोके इति भावः ।

पृ० ६०४. ८१. मां किं वर्णयसि विरहदुःखभागिनीम् ? तत्र चातुर्येणोद्धवः प्राह—भगवत इति । 'तच्चेत्, सोऽपि यशोदाहृदयमस्ति, परन्तु स क्व दृश्यते ? तत्राह उद्धवः—हृदयमेवेति ।

८४. युष्मद्भाग्यमधिकभाषणैः किं वर्णये ?–यस्मिन् मतिरिति । प्रेष्ठं प्रियं, तनोति करोति ।

पृ० ६०५. ८५. युवयोर्नित्यमच्युतसम्बन्धः कथमिति चेच्छृणु—एकैव त्वमिति। सदानन्दयुता सदा आनन्दयुता। यद्वा, सद्रूपानन्दयुता। असौ नन्दोऽपि यशोदयायुतः यशसा दयया च युतः, तद्वत् सद्रूपानन्दयुत इत्यर्थः। एवञ्च उभयोरैक्ये सदाऽच्युतस्य अन्वयः। 'अय् गतौ' गत्यर्थकानां ज्ञानार्थकत्वात्। श्रीकृष्णस्वरूपाज्ञानम् आत्मत्वेनेति भावः। अत उच्यते—'तदलं वचोभिः' इति।

८७. मद्रूपेण स एवाऽऽगत इति ज्ञात्वा तद्वचसि अश्रद्धा न कार्येत्याह—प्रियमिति।

८८. माथुरास्तस्य सुहृदः, वयं के ?—त एवेति।

८९. सत्यम्, तथापि तद्विरहो दुःसह इति चेत् तद्विरहो वां नास्त्येवेत्याह—सर्वहार्देति।

९०. कथं ब्रुवतोर्निशा व्यतीतेति नाश्चर्यं कार्यमित्याह ग्रन्थकारः—दुर्लङ्घ्याऽपीति। महानिशा संसारकारणं मूलाज्ञानम्। इह जगति।

९१. यद्वा, पुनः नाश्चर्यमित्याह ग्रन्थकारः—सर्वेऽपीति। यमुनायां गच्छन्नुद्धवः दधिनिर्मथनकाले उच्चैः कृष्णं गायन्तीनां गोपीनां गीतानि क्रमशोऽश्रुणोत्।

९२. केचन स्वाभीष्टसिद्धये किञ्चित् कुर्वन्ति, एतास्तु सर्वं चक्रुरित्याह—आहुरिति। 'केचन दुर्ग्रहाः शनिराह्वादयः ऋजवो यथा भवेयुः, तादृशं विधिं प्रकारम् अभीष्टप्राप्तये साधनं केचनाऽऽहुः। तमपि शान्त्यादिमन्त्रप्रकारं चक्रुः' इति माधवः। आर्जवविधिं मनसः सारल्यप्रकारम्। शीतकरार्चनं सोमपूजनम्।

पृ० ६०८. १०५. काचिदाह—सूर्याश्रितमिति। द्विजपूजितं सोमपूजितम्, 'सोमोऽस्माकं ब्राह्मणानां राजा' इत्यादिश्रुतेः। विष्णोः पदम् आकाशम्, तस्यैव 'सूर्याश्रितम्' इत्यादिविशेषणानि। पक्षे प्रभोश्चरणारविन्दस्येति माधवः।

१०७. एकाऽऽह—आलेप इति। मृजा मार्जनम्। परा गोपी। तस्य कृष्णस्य।

११०. परितप्यती काचिदाह—श्वश्रूरिति। यत्र दिने।

११४. पूर्वचरितं स्मरन्ती काचिदाह—कृष्णेति। वितर देहि। मातृसविधे मातुः समीपे।

पृ० ६१०. १२१. काचिद् बहुधा सम्बोधयति—हे कृष्णेति ।

१२३. कदापि कृष्णविस्मृतिर्मे नास्तीत्याह—कृष्णा गौरिति ।

१२४. एवं गीत्या किमबोधि ?—यो व्यापार इति । कृती पुण्यवान् ।

पृ० ६११. १२७. ग्रन्थकारः प्राह—हरेरिति । स्वान्ते अन्तःकरणे । अन्तः कृष्णोदयः वृत्तिरोधी तदितरविषयक-वृत्तिप्रतिबन्धकः, सूर्योदयो बहिर्व्यापारहेतुकोऽभवदित्यर्थः ।

१२८. प्रागनुभूतं भयं स्मरणेन व्यथयति, तद्युक्तमित्याह ग्रन्थकारः—निष्फलापीति ।

१२९. एवं कृष्णगीतानि श्रुत्वा उद्धवः आनन्दसागरे मग्नोऽभूदित्याह ग्रन्थकारः—एवं भूरितराणीति ।

१३०. नित्यमवश्यं विधेयमित्युद्धवचरितात् सूचितमर्थमाह—नित्यकृत्यमिति ।। ४६ ।।

## सप्तचत्वारिंशोऽध्यायः

पृ० ६१२. १. किमिति सर्वा उद्धवसमीपमाजग्मुरित्याह—समवकर्ण्येति । निरवधीः निःसीमाः व्यथाः, अवधीरयितुं दूरयितुमित्यन्वयः । अवधूतगृहक्रियाः त्यक्तगृहकार्याः ।

२. वयसैव कृष्णभिन्नोऽयमिति ग्रन्थकारः प्राह—जलजायतेति । व्रजवासिदृशां गोपीनां दृशाम् ।

४. उद्धवदर्शनात् महानानन्दस्तासां समभूदित्याह ग्रन्थकारः—व्याप्त इति । कुशाग्रमतिः सूक्ष्मबुद्धिः । नानोद्धवात्मकतया अनेकोत्सवरूपेण । तासां गोपीनाम् ।

५. तेनेति । निरामयः निर्बाधः । तदीक्षासदृगुद्धवः तस्य श्रीकृष्णस्य ईक्षया दर्शनेन सदृक् सदृशः उद्धवः उत्सवो यस्मात् सः, त्वल्लाभः ।

६. 'स्वव्रतं तेन त्यक्तं किमि'ति लौकिकं दर्शयन्त्यो गोप्यः पृच्छन्ति—कार्यमिति । अपास्तक्रमं त्यक्तक्रमम् ।

पृ० ६१३. ८. स्वार्थैकेति । सद्दयः सती दया यस्य सः । कुतः ?—यत इति । स्वीयार्पितोद्धवः स्वीयाभ्यः स्वकीयाभ्यः अस्मभ्यम् अर्पितः उद्धवः उत्सवश्च येन सः, दयाभावे उद्धवप्रेषणं कथं स्यादिति भावः ।

९. मधुकरदर्शनेन सूचितमर्थमाह ग्रन्थकारः—इतः सारमिति ।

पृ० ६१६. २९. राधाऽऽह—दूतत्वेनेति । तावकीनः तवायम् । त्वया वाचमियति चेन्न विद्म इति भावः ।

पृ० ६१७. ३५. किं वेति । तत्प्रकारः वशीकरणप्रकारः । यन्नाम यस्याः सपत्न्याः नाम । शकलयति खण्डयति । तस्या एवेति कुतः ? —स्फुटेति । घुसृणाः केशाः ।

३६. 'न सपत्न्या कीर्ति गायामि, किन्तु श्रीकृष्णरसिकतामि'ति भ्रमरः प्राह—आस्तामिति । ते त्वया कृतम्, अस्य श्रीकृष्णस्य रुचिररसिकतावर्णनं तावदास्ताम्, यतः त्वद्गानतः पूर्वमेवाऽस्माभिः स ज्ञातः । तदनुमतगते तत्सम्मतगते तवापि धीप्रभावो ज्ञातः । ज्ञातश्चेत् वर्ण्यताम् । उत्तमाङ्गीर्देवैरप्यलभ्या नवकुसुमलतास्त्यक्त्वा, अतनुलघुकृतां त्रिवक्रां कुब्जां गत्वा स्वमात्मानं कृतार्थं मन्यते, अतः अलं तद्रसिकतावर्णनेनेति भावः ।

३७. 'निरपराधास्त्यक्त्वा गतस्यापि उत्तमश्लोकत्वात् धृतचित्ता लक्ष्मीः परिचरति, न वयं तादृश्य' इत्याहुः—त्रैलोक्येति । त्रैलोक्याऽशेषमोहप्रदपदपरिषन्मुख्यसाम्राज्यपट्टां त्रैलोक्ये अशेषमोहप्रदस्थानसभायां मुख्यसाम्राज्यपट्टाम् । निखिलो नारदादिः । अस्य उत्तमश्लोकशब्दः कृष्णस्य सम्बन्धी अयम् उत्तमश्लोक इति शब्दः ।

३८. 'व्यर्थमस्मत्समीपे गायसी'त्याह—कृत्वा दूत्यमिति । त्वत्प्रियः कृष्णः ।

३९. किं करोमि, मनो न स्वाधीनम्—आकर्ण्येति ।

४०. 'उत्तमश्लोकशब्दार्थस्य सत्यत्वमपेक्ष्यते चेत् एवं वदे'-त्याह—काविति । अस्य कृष्णस्य ।

पृ० ६१८. ४२. 'पुनस्तन्मित्रतां सम्पादयितुमागतोऽस्मीति चेद् ? अशक्या तन्मित्रता' इत्याह—कृष्णस्त्वमिति ।

४४. रे भ्रमर ! किं वदसि ?—यूयमिति । मन्मित्रं कृष्णः । चित्रचेष्टाशयफलितविदः, चित्रचेष्टा च आशयश्च तयोः फलितमर्थं विदन्ति ताः ।

४५. कृष्णस्य युष्मत्-क्लेशकरं स्वभावं त्याजयिष्ये इति चेत् एवं न भावीत्याह—उक्त्वेति । तव सुहृदि कृष्णे कथमेवम् ? तथेति ।

पृ० ६१९. ४६. अहो आश्चर्यम्—मन्यमिति। अथवा नैतदाश्चर्यम्—तद्वेति। 'गां भूमिं दातुः बलेः अपि उपकारम् अस्मरन्' इति अन्वयो योज्यः।

४७. किं वदसि ?—को विश्वास्य इति। 'इति वक्तुं क ईशः स्यात् ? अपि तु ब्रह्मापि नैवे'त्यर्थः। यस्मिन् कृष्णे। तेन कृष्णेन। अथवा तस्य को दोषः ? अस्माकमेव दिष्टमिति भावः।

४८. परोपदेशे कुशलत्वं समीचीनं दृष्टमित्याह—निर्हेत्विति। अस्मिन् गोपीजने। चरति आचरति। सः कृष्णः।

४९. साश्चर्यमाह—ये त्वेनमिति। अत्र भक्तकर्तृकगृहादित्यागे। चित्रम् आश्चर्यं न, एषोऽस्मान् जहावित्याश्चर्यम्—तादृगिति। यद्युपासकाः गृहस्त्र्यादीन् न परित्यजन्ति, अपि तु तेष्वेवाऽऽसक्ता भवन्ति, तर्हि प्राप्यं श्रीकृष्णरूपमर्थं न लभन्ते। अतः प्राप्यार्थसन्दायकं प्राप्तियोग्यकृष्णरूपार्थस्य सन्दायकम्। उपासकानुचरणम् उपासकानामनुचरणं तद्युक्तम्। तादृक् गृहस्त्र्यादींस्त्यक्त्वा समुपासनम्। तथा त्यागकृत्। आचारी आचारः अस्यास्ती ती तथा आचारी।

५०. कृष्णवार्तया उभयोः खेदकरत्वाद् 'भण्यतामन्यवार्ते'-त्याह—अस्मादिति।

५१. 'आहूय त्यागे प्रवृत्तस्य अनाहूतत्यागे सन्देह' इत्याह—आहूयेति। कस्मात् ? प्राप्ता इहेति। 'प्रतियात व्रज नेह स्थेयं स्त्रीभिः सुमध्यमाः' इति, तथा 'तद् यात मा चिरं गोष्ठम्' इत्यादि च द्रष्टव्यम्। ऊह्यं विचारणीयम्।

पृ० ६२०. ५४. एवं बोधयेत्याह—अथेति।

५६. 'किमति उद्धवे भ्रमरप्रकल्पने'त्याह ग्रन्थकारः–जारिण्य इति। मदनादृताः कामेन आदृता अपि। अन्तः मनसि। राति गृह्णाति। तम् उद्धवम्।

पृ० ६२१. ६३. कृष्णस्यापि विरुद्धधर्मानाह—कुर्वन्निति। लाघवान्नूनवृत्तिः लघोर्भावादन्यूना वृत्तिर्यस्य सोऽपि।

६४. 'वयं न तत्कथां त्यजामः, त्वमपि रसकामश्चेदेवं कुरु' इत्याह–लिखित इवेति। विरुद्धप्रधानैः विरुद्धं प्रधानं येषु तैः।

६५. अतुलरसं 'ध्वाङ्क्षवत्' इति दृष्टान्तदाने कारणम्—दृष्टेति।

पृ० ६२२. ७०. 'वरय किमनुरुन्धे' इत्याद्युक्तेः कारणं दर्शयन्ती उद्धवं सत्करोति—अस्मानिति ।

पृ० ६२३. ७२. 'कृष्णश्चेदेवं स्मरति, तावतैव कृतार्था वयमि'त्याह—मन्निष्ठा इति । मदनघनरतोत्साहचित्ताः मदननिमित्तं घनरतं दृढरमणम्, तत्र उत्साहश्चित्ते यासां ताः । यत् यदि । आसां गोपीनाम् ।

७४. अद्वैतसुखाद् द्वैतसुखमधिकम्, कुतः ?—अद्वैतादिति । तत् सुखम् अद्वैतसुखम् । अन्यवार्ता द्वैतवार्ताम् ।

७७. 'यद्वा, दशभिर्जीवबोधः' इत्याह ग्रन्थकारः—गोकुला-लङ्कृतेति ।

७८. 'सत्यम्, उद्धवोऽपि भ्रमर एवे'त्याह ग्रन्थकारः—उत्फुल्लान्तरेति । सच्छ्रुतिवक्त्रतः सच्छ्रुतिरूपवक्त्रतः ।

७९. 'उद्धवमेव किमिति प्रहितवानि'त्याह ग्रन्थकारः—अन्यानिति । तत् किम् ?—यत्सत्यमिति । एताः गोप्यः ।

पृ० ६२४. ८१. 'गोपीप्रेम दृट्वा उद्धवस्यापि चित्तं प्रेमार्द्रमभूदित्यत्र नाश्चर्यमि'त्याह ग्रन्थकारः—तत्प्रेमभावमिति । तथा प्रेमार्द्रम् ।

८२. 'गोपीप्रेम किं वक्तव्यमि'त्याह ग्रन्थकारः—असीममेवेति ।

८३. 'अहो ! किं वाच्यम् ? वक्तव्यं यत्, तत्तु प्रथममेव भवतीभिर्ज्ञातमि'त्याह उद्धवः—वक्तव्यमिति ।

८४. पूर्णार्थत्वमेव विशदयति—यत्क्षुद्रेति । यत् मनः । क्षणशालि चञ्चलम्, भवतीति शेषः ।

पृ० ६२४. ८६. यतः—'मोक्षसाधनसामग्र्यां भक्तिरेव गरीयसी', सा तु जातैवे'त्याह—दानव्रतेति । यस्यां भक्तौ । अच्युतपदा अच्युतः पदं स्थानं यस्याः सा ।

पृ० ६२५. ८७. 'किमाश्चर्यमतः परमि'त्याह—तत्सन्देशहर इति ।

८८. कृष्णोक्तिमनुवदन् सङ्केतेनाऽऽह—गोप्य इति । यथा मे गोप्यः हृदयङ्गमाः, तथा नहि रमे'ति भावः । श्रौत-हृदाशयेन श्रुतिसम्बन्धि रहस्यम् आशये यस्य तेन । मयेति शेषः । सुदृशः सुबुद्धयः । अत इति शेषः ।

पृ० ६२५. ८९. 'कार्यं कारणसत्त्वान्नहि कारणवियोगः कार्यस्ये'त्याह—भूतग्राम इति। आराद् दूरात् सामीप्याद् वा भौतिके भूतकार्ये दृष्टे सति तत्र आकाशादिभूतग्रामो नास्तीति क्वचिदपि न विभातीत्यन्वयः। सर्वाद्यस्य सर्वकारणस्य।

९०. एवं सन्ततयोगेऽपि वियोगभानस्य को हेतुः ?—सत्यनारतेति।

९१. 'सन्निकर्षो न कार्यं' इत्याह—यत्प्रीतिरिति।

पृ० ६२६. ९२. 'कथमेवं कार्यमिति चेत् ? मद्दृष्टान्तेने'त्याह—सर्वत्रापीति। तथा युष्मन्नामसकामा। अखिलम् इन्द्रियं कार्यं वा। सर्वात्मना सर्वप्रकारेण यूयं हृत्स्था इति। अस्मिन् मथुरायाम्। विभाव्यते इति शेषः।

९३. कृष्णः प्राह—निर्व्याजमिति। अनन्यगोचरचरः अनन्यविषयकः। उत्सवान्तरतिरस्कारप्रगल्भोदयः उत्सवान्तरस्य तिरस्कारेण प्रगल्भः प्रौढः उदयो यस्य सः। उद्धवे उत्सवे तद्वचोन्यासात् रासादिविषयकवचोनिक्षेपात्। इमम् उद्धवम्।

पृ० ६२७. १०१. 'साङ्ग्यव्यङ्गचिन्तनैरलम्, भजनेनैव कृतार्थते'त्याह—तद्ध इति। श्रीशप्रसादार्थकं श्रीशप्रसादः अर्थो यस्य तत्। उभयविधा रतिसौलभ्य-मोक्षसौलभ्यरूपा। भक्तैरिति शेषः।

पृ० ६२८. १०६. ता विज्ञानिन्योऽभूवन्निति श्रौतां सम्मतिमाह— सुखरेति। अतनुतापं कामतापं दीर्घतापं संसारकारणाज्ञानतापं च।

१०७. विज्ञत्वं सङ्गोप्य लौकिकभावं वर्णयति—विज्ञातेति। तम् उद्धवम्। ताः गोप्यः।

१११. गोप्यो विरहेण तपन्त्यः प्राहुः उद्धवम्—लब्ध इति। यवागूद्रवदोदनम्, 'कह्लेरी'ति भाषायाम्। अस्य कृष्णस्य। अल्पिकासु किं न सिद्धमित्यन्वयः।

पृ० ६२९. ११२. 'रे उद्धव ! केयमस्मद्दशा ?'—अकार्यमिति।

११४. 'आशयैव जीवाम' इत्याहुः—एष्यतीति। भगवत्स्मृतीनां भगवतः स्मृतिर्येषु तेषाम् अह्नां सुदिनत्वं सम्पादयतीति।

११६. 'शुश्रूषुं श्रावयामासुरि'त्याह ग्रन्थकारः—व्रजगतमिति। कथयितुं ज्ञातुम्।

पृ० ६३३. १५१. 'रे उद्धव ! किं श्रोतुमिच्छसि ?'—कर्णं इति ।

१५२. किं वाच्यम् ? 'जीवो न याती'त्यत्र कारणम्—सानन्दमिति । मया जीवेन । कुतः ? यतः वीराऽसुधर्माश्रितः वीरो यः असुः, तद्धर्ममाश्रित्य स्थितः । अतो विना प्राणं कथं गन्तव्यमिति जिह्लेति जीवः । एवं जीव इव इन्द्रियाणां मध्येऽपि एक एव न सत्रपः ।

पृ० ६३४. १६३. गोप्य ऊचुः—स्त्रीणामिति । श्रुतिं वेदरूपत्वेन परिज्ञातम् । शासनं प्रियस्य शिक्षणम् । अवधार्यं श्राव्यम् । सः प्रियः । इति त्वम् आलोकय, प्रथमं त्वं विचारय । तदनु तत्पश्चात् ।

१६४. 'एवं कथये'त्याहुः—उग्रसेनमिति ।

१६५. कुत उवास ?—इतीति । अपत्रपं त्यक्तलज्जम् । मुदितः आनन्दितः ।

१६७. अह्नां लवप्रायत्वं योग्यमेवेत्याह ग्रन्थकारः—कल्पोऽपीति । अनल्पः; महानपि श्रुतिगीततः श्रवणगायनतः । द्रष्टुः गोपीजनस्य । तस्य कृष्णस्य ।

१६८. उद्धवरमणे कारणमाह ग्रन्थकारः—कुतुकत इति । अच्युतपदी अच्युतस्य पदानि यस्मिन् (विपिने) तस्मिन् । अस्य उद्धवस्य । प्रतिकव्यक्ता प्रतिमङ्गला । विजनता जनराहित्यम् । यद्वा, वौ गरुडे जन्यते प्रादुर्भूयते अनेनेति विजनः, तस्य भावस्तत्ता, भगवद्रूपतेति भाव इति माधवः ।

पृ० ६३५. १७०. एकान्ते स्त्रीभिः सह चरत उद्धवस्येन्द्रियग्रामः कथमुन्मदो नाभवत् ? तत्राऽऽह ग्रन्थकारः—सर्वभावेति ।

१७१. 'एवं कथं सम्भवति ? 'मात्रा स्वस्रे'त्यादितन्निषेधादिति चेन्न । सामान्यैरेकान्तो वर्ज्य इति तद्वाक्यसार्थक्यम् । उद्धवस्य तु चरित्र श्रीशुकाचार्यादपि आश्चर्यकारी'त्याह ग्रन्थकारः—नैवेति ।

१७२. उद्धवो यशोदावचनं स्वाप्निकं निशम्य तुष्टावेत्याह ग्रन्थकारः—कृष्णेति । आकलय्य ज्ञात्वा ।

१७३. ग्रन्थकारः प्राह—प्रतिदिनमिति । प्रतिपलं प्रतिक्षणम् । सः उद्धवः । विधेरपि ब्रह्मणोऽपि । अतिदुरधिगम्यम् अतिदुष्प्रापम् ।

पृ० ६३५. १७४. उद्धवः गोपीः स्तौति--धन्येयमिति । योषाविशेषादिमाः विशेषात् इमाः योषाः धन्याः । यद्वा, योषाविशेषेषु आदिमाः अग्रगण्या इति माधवः । यासां गोपीनाम् । तत्र भवतः कृष्णस्यापि श्रुतिः सस्पृहा जाता, गोपीगीतस्य श्रवणकर्तृत्वात् ।

पृ० ६३६. १७७. यल्लोचनामिति । सर्वशिरोभिवन्द्यचन्द्रोल्लसन्मृगदृगञ्चलजित्वरं सर्वशिरोभिवन्द्यात् चन्द्रादपि उल्लसति तत्, हरिणदृष्टिजेतृ च । अनुपमाः निरुपमाः सत्य इति किम्, इतोऽपि अग्रे वाच्यम् ?

१७९. उद्धवः प्राह--सन्त्विति । चरमायतनम् अन्तिमस्थानम् । एताः गोप्य एव ।

१८०. गोपीनां भाग्यमभिनन्दति—यच्चिन्तनायेति । पद्मनाभः कृष्णः, यच्चिन्तनाश्चितमनाः यासां गोपीनां चिन्तने अश्चितं मनः यस्य सः कृष्णः ।

१८१. स्वभाग्यमभिनन्दति—स्फुटमिति ।

पृ० ६३७. १८२. जगति भगवत्प्राप्तीच्छुभिः किं कार्यम् ? तदाह ग्रन्थकारः—गेयमिति । शत्रुबलं कामक्रोधादि । सुकृतं पुण्यम् । चेयं सम्पादनीयम् । इह जगति ।

१८३. भगवद्भक्तेति । भगवद्भक्तपद्रेणुस्पर्शे प्राप्ते सति ।

१८४. किमिति पादरेणुं ननाम ?—विश्वमिति । वीक्ष्य अहोभाग्यं माहात्म्यं चासामिति मत्वा ।

१८६. 'नन्दादीनामुद्धवप्रार्थना युक्तैवे'त्याह ग्रन्थकारः—ये सर्वदैवेति ।

१८७. संसारे कः सार इति नन्दः प्राह—मनसेति ।

पृ० ६३८. १८९. 'कृष्णमेवं कथये'त्याह नन्दः—त्वत्पादेति ।

१९१. उद्धवचरितात् सूचितमर्थमाह ग्रन्थकारः—श्रीशेति । यत् यदि ।

१९३. उभाभ्यां दानेन सूचितमर्थमाह—भक्तिप्रिय इति । परिष्कृतं व्याख्यातम् तेन उद्धवेन ।। ४७ ।।

## अष्टचत्वारिंशोऽध्यायः

पृ० ६३९. ७. कुब्जाग्रहणात् सूचितमर्थमाह ग्रन्थकारः, कः कृष्णाभिप्रायः ?—यः पूर्णकाममिति । अन्तः मनसि ।

८. विना रामं गमनेन सूचितमर्थमाह—पान्थानामिति ।

पृ० ६४०. ११. यद्वा, योग्यमेव रामवर्जनमित्याह—युक्तमेवेति ।

१३. उद्धवसहितागमने कारणम्—विदितेति ।

१६. ग्रन्थकारः प्राह—मावीति । 'यत्रैप' इत्यत्र 'यत्रैशः' इति टिप्पणीसम्मतः पाठः । ऐशः ईशसम्बन्धी यस्योपरि भगवत्प्रसादो भावी, तद्गृहे सुवर्णेषु ब्राह्मणेषु ये सद्रत्नरूपाः श्रेष्ठाः, तेषां मुक्तानां च अनिशं स्थितिर्युक्तैव । स्पष्टोऽन्योऽर्थः ।

१८. भूमौ केनाऽभिप्रायेणोपाविशत् ?-प्रभ्वासनमिति । चकास्ति सर्वोपरि विराजते ।

पृ० ६४१. २१. दान्तपर्यङ्कासनात् किं सूचितम् ?—शान्तत्वमिति । सदान्तपर्यङ्के गजदन्तनिर्मितपर्यङ्के ।

२२. हस्तग्रहणात् सूचितमर्थमाह—मा सवत्विति । अवैधम् अविहितम् । तत्सङ्ग्रहम् कुब्जायाः सङ्ग्रहम् ।

पृ० ६४२. २९. कमाशयं प्रकटयन्तां कृतार्थां चक्रे ?—एकेनेति । एकेन तन्तुवायेन । परेण सुदाम्ना । अन्येन त्रिवक्रया ।

३२. स्वकीयं वक्रत्वं गोपीषु न्यधादित्याह साश्चर्यं ग्रन्थकारः—कुब्जापीति ।

३४. 'दुर्भगे'त्युक्तौ कारणम्—सकलार्थदमिति । अवगतिः बोधः ।

३५. कुतः शुकाश्चर्यम् ?—प्राप्यापीति । अनङ्गसुख मोक्षसुखम् ।

३६. प्राक्तनः संस्कारः प्रबल इत्याह ग्रन्थकारः—निर्यत्नत इति ।

पृ० ६४३. ३७. केनाऽभिप्रायेणैवं वव्रे ?—मदाशयेति । अदभ्रसौख्यदं बहुसौख्यदम् ।

४०. कथं तन्मनोरथपूरणमल्पेन कामेन ?—आकल्पेति । दीर्घे प्रसिद्धमेतदाख्यानम् । उक्तितः 'तस्यै कामवरं दत्त्वे'ति ।

पृ० ६४४. ४३. स्वगृहयानात् सूचितमर्थमाह ग्रन्थकारः—स्वधामेति । विधेयः कार्यः । विधेयः विधिप्रतिपादितः ।

४४. कुब्जागृहात् अक्रूरगृहाभिमुख्येन सूचितमर्थमाह ग्रन्थकारः—कामालम्बनमिति ।

४५. यद्वा, सतां रक्षणाय अक्रूरगृहं ययौ इत्याह ग्रन्थकारः—हिंस्रमिति । स्वकानां वसुदेवादीनाम् । उरीकृतात्मजनुषः उरीकृतम् आत्मनः जनुर्येन तस्य मे । तद्गृहम् अक्रूरस्य गृहम् ।

४६. यद्वा, सतां मार्गं दर्शयन् ययावित्याह ग्रन्थकारः—असतीति । अक्रमात् युगपत् अभ्युपेते प्राप्ते सति ।

४७. कुत एवम् ?—नैवमिति । कुब्जेक्षणः कुब्जाया ईक्षणं दर्शनं यस्य तथाविधः सत्यवाक् सन् ईदृशं प्रथममेव कुब्जागृहगमनसदृशं कथं कुर्यादित्यन्वयः ।

४८. यद्वा, उद्धवसाहित्ये कारण प्रदर्शयन् 'तद्गृहयानेन भूसान्त्वनं चकारे'त्याह ग्रन्थकारः—नीत इति । अनेन कृष्णेन । 'अयं श्रीकृष्णस्तमेव उत्सवम् एकार्थत्वादुद्धवञ्च गृहम् ( अक्रूरस्य ) निन्ये' इत्यन्वयः ।

४९. रामसाहित्ये कारणमेष कृष्णविमर्शः—भूभारेति ।

पृ० ६४५. ५१. यद्वा—न राजकार्यमिति । तत्कार्यः तत् राजसम्बन्धि कार्यं यस्य सः ।

५३. यद्वा, किं दर्शयन् प्रभुरागात् ?—अम्बिति ।

५४. यद्वा, किं बोधितम् ?—यदस्मिन्निति ।

५६. कैमुत्येन तदानन्दं वर्णयति ग्रन्थकारः—कथञ्चिदपीति । असौ अक्रूरः । किं वाच्यमस्य भाग्यम् ? अयं तु सोद्धवबलं पुनः स्वयमेवोपागतं पुनश्चक्षुषाऽपश्यदिति योज्यम् । ईदृगानन्दभाक् असामान्यम् आनन्दं भजते सः ।

पृ० ६४६. ५८. कथं तैरभिवादिनः ?—अङ्गीकृतेति ।

५९. पूजनप्रकारमाह ग्रन्थकारः—भक्तेष्टेति । भक्तोपरि इष्टानुग्रहत्राण-दयासु यद् दाक्षिण्यं तस्मिन् दीक्षितं गृहीतदीक्षम् ।

६०. तीर्थं शिरसा कुतो दधार ?—उग्र इति ।

पृ० ६४६. ६२. पादयोरङ्के स्थापने कारणम्—सर्वतोऽपीति ।

६३. संमर्दने कारणम्—गर्भितमिति ।

६४. प्रथममेव कंसो हृत इति किमुवाच ?—सुखतोषेति ।

६५. साश्चर्यमाह अक्रूरः—ज्ञात इति । तन्मयः जगन्मयः तद्गतोऽपि तद्बाह्यः कुतः ? यतः तदीयधर्मरहितः तदीयधर्मैः भावविकारैः रहित इत्यन्वयः ।

पृ० ६४७. ६६. 'त्वत्कृपया त्वां ज्ञातवानि'त्याह अक्रूरः—यः सत्यव्रतेति । सत्यव्रतरक्षिता मत्स्यः, अचलधरः कूर्मः, धराधारको वराहः, कयाधुजाऽवनपरः प्रह्लादरक्षणपरो नरसिंहः, राजन्यान्तकरः परशुरामः, दशमुखध्वंसी दाशरथी रामः, मनुजाकृतिः कृष्णः ।

६७. आत्मानमभिनन्दति—यत्पादेति ।

७१. कृष्णं विहाय अन्यगामी गर्दभ इत्याह—अनाहूतोऽपीति ।

७२. प्रार्थयति—मायामिति । विषमावगाहां विषमः अवगाहः विलोडनम् अवस्थानं यस्यां ताम् । मायाया दूरीकरणमसम्भवीति चेत् ।

पृ० ६४८. ७३. लौकिकभाषणकरणे कारणम्—एवमिति ।

७४. हासे कारणम्—यदपाकृतिरिति ।

७७. सतः सम्भावयति कृष्णः—चैतन्यमिति । तादृशाः चिद्रूपाः । इति हेतोः, तद्वराः तेभ्यो वरा ।

७८. उभयोरपि वचनं योग्यमित्याह कृष्णः—सर्वात्मभावेति ।

८०. 'भक्तक्लेशोऽसह्य' इत्याह कृष्णः—ममावेश इति । कस्मिन्नपि निमित्ते ।

पृ० ६४९. ८२. 'पाण्डवचिन्ता योग्यैवे'त्याह ग्रन्थकारः, तत्रापि धर्मराजचिन्तायां हेतुमाह कृष्णः—उद्दिश्येति ।

८३. भीमचिन्तायां कारणम्—भूर्युपकृतमिति ।

८४. अर्जुनचिन्तायां कारणम्—धनञ्जयेति । तत्प्रसादो धनञ्जयस्य प्रसादः ।

८६. नकुलचिन्तायां कारणम्—यद्यहमिति । सन्नकुलः संत्रासो

नकुल:, सन्नकुलम् आसन्नं समीपं स्वीयत्वेन स्वमनसि कृतमित्यर्थ: । एवम्भूतं तटकुलं च ।

पृ० ६४९. ८७. सहदेवचिन्तायां कारणम्--सहदेवेनेति ।

पृ० ६५०. ९३. आज्ञापयति--एक इति । अतुलवसुपदायत्तत: अतुलधने पदे गति: ज्ञानं वा येषां ते । अतुलवसुयुक्तस्थानाधीनत्वाच्च ।

कृष्णो धृतराष्ट्र वर्णयन् सन्मार्गधर्मं दिशति—दुर्वर्णाद्या इति । कृष्ण: प्राह—कल्याणमिति । अन्यत् अकल्याणम् ॥ ४८ ॥

## एकोनपञ्चाशत्तमोऽध्याय:

पृ० ६५२. १. अक्रूर प्रेषणेन किमबोधयत् ?—ये धर्मेति । अस्य धृतराष्ट्रस्य ।

३. प्रथमंभीष्मादिप्रश्ने कारषम्—य इति । गूढप्रणिधे: चारपुरुषस्य ।

४. कतिचिन्मासवासे कारणम्—विनेति । अयं धृतराष्ट्र: ।

६. पार्थेषु प्रजानुरागे कारणम्—आसीदिति ।

पृ० ६५३. ८. कस्मिन् किं दृष्टमक्रूरेण ?—प्रश्रय इति । प्रश्रयो विनय: । बलं शरीरसामर्थ्यम् । वीर्यं पराक्रम: । तेज: कान्ति: पराभिभवसामर्थ्यं च । ओज: दीप्ति: इन्द्रियसामर्थ्यं च । चरमे सहदेवे ।

११. किमित्यक्रूराय न्यवेदयन्निति चेन्नीतिमाह विदुर:—ज्ञाताज्ञातेति । नाऽऽप्त: न प्राप्त: ।

१२. कुत एवम् ?--धार्तराष्ट्रेति । तम् आप्तम् ।

१३. अक्रूरायैव कथने कारणम्--भ्राताऽपीति ।

पृ० ६५४. १५. पृथा कैमुत्येनाऽऽह--सल्लोकेति । एवं चेत् अद्य यावद् वार्ताऽपि कैरपि न पृष्टा ? एतेन किं निश्चितम् ? अतो निश्चितमिति । अवशिष्ट इति शेष: ।

१८. लौकिकं दर्शयन्ती आह--येषामिति ।

१९. एवं प्रश्ने कारणम्--परित्रातेति । ननु निश्चयेन । हृदा मनसा ।

पृ० ६५४. २१. रे अक्रूर ! प्रभुरत्र आगमिष्यति किम् ?—दीनामिति । अथवा किमर्थमागच्छेत् ?—श्रीशस्येति ।

पृ० ६५५. २२. लौकिकं दर्शयन्ती भक्तार्तिहरत्वं कैमुत्येन साधयति—लोकोपकारेति ।

२७. दयालुत्वं स्मरन्ती शरणं व्रजति—किं कुर्यामिति । अकम्पा स्थिरा ।

पृ० ६५६. २९. 'हे कुन्ति ! त्वयि तु कृष्णकृपाऽस्त्येवे'त्यक्रूरः, यतः धर्मरक्षार्थमेव प्रभोरवतार इत्याशयेन धर्मराजं वर्णयति—या धर्मोद्भवेति । अनपायिभव्यगुणसद्धर्मैकहार्दस्थितौ अनपायिनश्च ते भव्या मङ्गलरूपा गुणास्तेषाम् संश्चासौ धर्मश्च तस्य च एका मुख्या हार्देन प्रेम्णा स्थितिर्यस्यां तस्याम् ।

३०. पूर्ववृत्तं स्मारयन् 'चिन्ता न कार्ये'त्याह भीमं वर्णयन्—साहाय्यमिति । विधितः भाग्यतः जानकीजानिः रामः ।

३१. सान्त्वयन् अर्जुनं वर्णयति—य इति । हेमप्रसवः हेम्नः प्रसवो यस्मात् सः । अध्वरभुजां देवानाम् ।

३२. नकुल वर्णयन् सान्त्वयति—सत्कुलमेवेति ।

३३. सहदेवं सान्त्वयति वर्णयति च—सहदेवेनेति ।

पृ० ६५७. ३५ 'महत्त्वत्प्रारब्धं तेनैव समीचीनं भवेदि'त्याह—दुर्वासा इति । 'अपरदिविषदां न पराः श्रेष्ठा येभ्यस्ते च ते दिविषदो देवाः तेषां सकाशात् सुतानां प्राप्तिः क्व ? तत्रापि पत्युरानुकूल्यं क्वे'ति योज्यम् । येन प्रारब्धेन । सम्भाव्य प्रत्यक्षीभूय । अव्याजभव्यम् अकपटमङ्गलम् । विधिः प्रारब्धम् । क्षमः समर्थः ।

३६. उपदिशन् आवासासयति—बधानेति । 'मन' इति लुप्तसप्तम्यन्तम्, मनसीत्यर्थः । अजः त्वत्प्रारब्धरूपः कृष्णः ।

३७. विदुरस्तात्त्विकमाह—अव्याजेति ।

४०. मथुरागमनसमये धृतराष्ट्रपालनाय याने कारणमाह ग्रन्थकारः—येनेति । येन सहवासेन । नयविदा नीतिज्ञेन ।

पृ० ६५८. ४२. निर्भयमाह—धर्मेणेति । तेषु राजसु अन्यबोधितनयापेक्षा अन्यबोधितन्यायापेक्षा नावश्यकी ।

पृ० ६५८. ४३. अक्रूरः प्राह—दृष्टादृष्टेति । आद्ये दृष्टफले कार्ये । साद्याग्रचाः साद्ये मुख्याः । चरमे अदृष्टफले ।

४४. त्वद्वर्तनमाश्चर्यकरमित्याह—पीयूषमिति । एवं पाण्डवद्रोहरूपम् ।

४५. कथं वर्तितव्यम् ?—धर्ममिति ।

४६. 'कोऽयं पाण्डवपक्षपातः ? ने'त्याह—दत्तमिति । तर्ह्येवं कथमुच्यते ?—उक्तमिति । अकैतवं सरलम् ।

पृ० ६५९. ५०. स्पष्टमाह—वर्तस्वेति । श्रीशादेशः कृष्णाऽऽज्ञा । दृगिव चर्मचक्षुरिव ।

५३. धृतराष्ट्रः प्राह—सर्वत्रेति । प्रगुणनयचणः अत्यन्तगुणयुक्तनीतिज्ञः । अक्रूरः प्राह—एवं चेदिति । कुक्षिम्भरिः स्वोदरपूरकः । अस्मात् अभिमानात् । त्रिजगदनुमतिः त्रिलोकसम्मतिः । यत्र विषये ।

पृ० ६६०. ५४. 'आस्तामेतत्, नास्माकं कस्यापि भीतिरिति धृतराष्ट्रः प्राह—अस्तीति । अक्रूरः प्राह—राजन्निति ।

५५. रे अक्रूर किमेवमुच्यते ? 'सत्यमुच्यते, परन्तु त्वत्प्रारब्धेन तव विपरीतं भाती'त्याह अक्रूरः—वर्षन्तीति ।

५७. 'मयि दोषदृष्टिं मा कुरु, त्वदर्थमेव कृष्णो मामत्र प्राहिणोत्'—पथ्यामिति । चेतसि स्वीये । यं माम् ।

पृ० ६६१. ५९. धृत्वेति । यस्य कृष्णस्य ।

६०. यत्प्रोक्तमिति । 'श्रवणे प्रेष्टम्, अश्रवणे अत्यनिष्टमि'त्यक्रूराभिप्रायः ।

६१. साश्चर्यमाह ग्रन्थकारः—यथेति । सः धृतराष्ट्रः ।

६२. 'दृष्टान्तो युक्त' इत्याह ग्रन्थकारः दातुरिति । यत् यतः । तेन अमृतेन । सः धृतराष्ट्रः ।

६४. साश्चर्यमाह ग्रन्थकारः—जाड्यान्वितमिति । तदुक्तिः अक्रूरोक्तिः । योग्यमेतत्, परन्तु—यच्चेति ।

६५. धृतराष्ट्रः सत्यमाह—यद्भीत्येति । अमर्त्याधिपः इन्द्रः । तस्य कृष्णस्य । विधेः नियोगशास्त्रस्य ।

पृ० ६६२. ६७. 'अहो ! दुर्निवारो मोह' इत्याह ग्रन्थकारः—भूभूरीति । कुन्तीभुवः पाण्डवाः । अस्य कृष्णस्य । ज्ञात्वा धृतराष्ट्रेण । तदुपेक्षणं पाण्डवानामुपेक्षणम् ।

६८. एवं नमस्कुर्वता धृतराष्ट्रेण किमबोधि ?—यः सृष्ट्वेति ।

७०. अक्रूरचरितात् सूचितमर्थमाह ग्रन्थकारः—प्रभोरिति । तदनु आज्ञामनुसृत्य ।

७१. अक्रूरस्तत्रत्यं वृत्तमाह—दृष्ट इति । दुष्टोपध्यसुखा दुष्टानाम् उपाधिभिः कपटैर्न विद्यते सुखं यस्याः सा ।

पृ० ६६३. ७२. अग्रिमं प्रभुचरितं सङ्क्षेपेणाऽऽह ग्रन्थकारः—श्रुत्वेति । अस्य युधिष्ठिरस्य । इमं धृतराष्ट्रम् ।

७३. ज्ञात्वेति । अस्य धृतराष्ट्रस्य । अमुष्य धृतराष्ट्रस्य । शान्तमनसे धर्माय । तत् राज्यम् ।

## उपसंहारः

पृ० ६६४. ७४. चरितमुपसंहरति ग्रन्थकारः—एवमिति । प्रियजनैः भक्तजनैः । सरामः रामाभिः सहितः बलरामसहितश्च ।

७५. 'आत्मानं कृतार्थयितुमेव प्रवृत्ता मे वाणी'त्याह ग्रन्थकारः—श्रीमदिति । श्रीमच्छ्रीनाथपादाम्बुजरसविलसन्माधुरी श्रीमच्छ्रीनाथस्य पादाम्बुजयो रसेन विलसन्ती माधुरी यस्याः सा । साधुरीतिप्रख्याताखर्वगर्वा साधुषु रीत्या प्रकारेण प्रख्यातः अखर्वः विपुलो गर्वो यस्याः सा । यदुमणिरमणी यदुमणेः कृष्णस्य रमणी रमयतीति तथा । तोषिणी तोषः सन्तोषः अस्या अस्तीति तोषिणी सुवाणी, सत्कृतार्थं सन् कृतः अर्थो जीवभावप्रयोजनं येन तं स्वात्मानम्, अतुलानन्दभाजम् अतुलानन्दं भजते तथा तम् । कलयितुं सम्पादयितुं प्रवृत्ता । कुत्र ? अशेषे चित्रे चरित्रे, अत्र पुनः अणुतरोऽप्यभिमानो नास्तीति माधवः ।

७६. कृतार्थतामाविष्करोति ग्रन्थकारः—न भाव इति ॥ ४९ ॥

श्रीकृष्णकुलपूज्यायाः श्रीदुर्गायाः प्रसादतः ।
श्रीकृष्णात्मज-दातार-माधवेन सतां मुदे ॥ १ ॥

भजनानन्दमग्नस्य हरेर्भक्तिरसायने ।
अवगाह्याऽऽत्मशुद्ध्यर्थं पद्यरत्नान्यवापि हि ॥ २ ॥

तल्लेखनानन्दवार्धावाप्लुतेनाऽगणय्य तान् ।
प्रारब्धकर्मजांस्तत्र व्याधिविघ्नानलेखि च ॥ ३ ॥

नभस्यकृष्णैकादश्यां देवेज्यदिवसे शुभे ।
शून्याऽष्टनिधिभूसंख्ये श्रीहरिस्तेन तुष्यति ॥ ४ ॥

॥ ॐ तत्सत् ब्रह्मार्पणमस्तु । जय देवि दुर्गे ! जय जगदम्ब ! जय जय सच्चिदानन्दरूपिणि ! जय जय भगवति ! जय जय भुवनेश्वरि ! जय जय देवि दुर्गे ! जय जय जगदम्ब ! ॐ ॥

## ★ सत्साहित्य पढ़िये ★

| क्रम | पुस्तक | मूल्य | |
|---|---|---|---|
| १. | माण्डूक्य-प्रवचन (आगम-प्रकरण) | ६.०० | |
| २. | माण्डूक्यकारिकाप्रवचन [वैतथ्य-प्रकरण] | ५.०० | |
| ३. | श्रीमद्भागवत-रहस्य | २.५० | |
| ४. | भक्ति-सर्वस्व | ५.०० | |
| ५. | भगवान्‌के पाँच अवतार | २.०० | (अप्राप्य) |
| ६. | ईशावास्य-प्रवचन | १.२५ | ( ,, ) |
| ७. | सांख्ययोग | ५.०० | ( ,, ) |
| ८. | भक्तियोग | ४.५० | ( ,, ) |
| ९. | पुरुषोत्तमयोग | २.५० | |
| १०. | ब्रह्मज्ञान और उसकी साधना | ६.५० | |
| ११. | गोपीगीत | ३.५० | |
| १२. | भागवत-विचार-दोहन | १.०० | |
| १३. | नारद-भक्ति-दर्शन | ६.०० | |
| १४. | महाराजश्रीका एक परिचय | ०.५० | |
| १५. | मुण्डकसुधा | २.५० | |
| १६-१७. | आनन्द-वाणी भाग १-२ | ०.५० प्रति | (अप्राप्य) |
| १८-२५. | आनन्दवाणी भाग ३-१० | १.०० प्रति | |
| २६. | महाराज श्रीका एक परिचय [सिन्धी] | ०.२५ | |
| २७. | मोहन नी मोहनी [गुजराती] | ०.६० | |
| २८. | चरित्र-निर्माण आणि ब्रह्मज्ञान [मराठी] | १.०० | |
| २९. | श्रीमद्भागवत-रहस्य [सिन्धी] | २.०० | |
| ३०. | साधना और ब्रह्मानुभूति | ३.५० | |
| ३१. | गोपियोंके पाँच प्रेमगीत | ०.२० | |
| ३२. | श्री उड़ियाबाबाजी और मोकलपुरके बाबा | ०.२० | |
| ३३. | ज्ञान-निर्झर (श्री डोंगरेजी महाराज) | ०.२० | |
| ३४. | क्या साधु कुछ राष्ट्रसेवा कर सकते हैं! | ०.१० | |
| ३५. | अपरोक्षानुभूति-प्रवचन | ४.५० | |



निम्न लिखित पतेपर पत्र लिखकर अपनी रुचिकी पुस्तकें मँगाइये।

**सत्साहित्य-प्रकाशन-ट्रस्ट**

'विपुल' २८/१६ रिजरोड, मलाबार हिल, बम्बई-६